The Department of Public Instruction, Bo

# KÂDAMBARÎ

BY

BÂṆA AND HIS SON.

EDITED BY

PETER PETERSON, B.A., BALL. COLL., OXON. M.A., D.SC., EDIN.,

ELPHINSTONE PROFESSOR OF SANSKRIT, BOMBAY.

PART II.

INTRODUCTION AND NOTES.

THIRD EDITION.

*Registered under Act XXV. of* 1867.

Bombay:
GOVERNMENT CENTRAL BOOK DEPÔT.

1899.

BOMBAY SANSKRIT SERIES No.

# कादम्बरी ।



रजोजुषे जन्मनि सत्त्ववृत्तये
स्थितौ प्रजानां प्रलये तमःस्पृशे ।
अजाय सर्गस्थितिनाशहेतवे
त्रयीमयाय त्रिगुणात्मने नमः ॥ १ ॥

जयन्ति बाणासुरमौलिलालिता
दशास्यचूडामणिचक्रचुम्बिनः ।
सुरासुराधीशशिखान्तशायिनो
भवच्छिदस्त्र्यम्बकपादपांशवः ॥ २ ॥

जयत्युपेन्द्रः स चकार दूरतो
विभित्सया यः क्षणलब्धलक्ष्यया ।
दृशैव कोपारुणया रिपोरुरः
स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥ ३ ॥

नमामि भर्वोश्चरणाम्बुजद्वयं
सशेखरैर्मौखरिभिः कृतार्चनम् ।
समस्तसामन्तकिरीटवेदिका-
विटङ्कपीठोल्लुठितारुणाङ्गुलि ॥ ४ ॥

अकारणाविष्कृतवैरदारुणा-
दसज्जनात्कस्य भयं न जायते।
विषं महाहेरिव यस्य दुर्वचः
सुदुःसहं संनिहितं सदा मुखे ॥ ५ ॥

कटु क्वणन्तो मलदायकाः खला-
स्तुदन्त्यलं बन्धनशृङ्खला इव।
मनस्तु साधुध्वनिभिः पदे पदे
हरन्ति सन्तो मणिनूपुरा इव ॥ ६ ॥

सुभाषितं हारि विशत्यधो गला-
न्न दुर्जनस्यार्करिपोरिवामृतम्।
तदेव धत्ते हृदयेन सज्जनो
हरिर्महारत्नमिवातिनिर्मलम् ॥ ७ ॥

स्फुरत्कलालापविलासकोमला
करोति रागं हृदि कौतुकाधिकम्।
रसेन शय्यां स्वयमभ्युपागता
कथा जनस्याभिनवा वधूरिव ॥ ८ ॥

हरन्ति कं नोज्ज्वलदीपकोपमै-
र्नवैः पदार्थैरुपपादिताः कथाः।
निरन्तरश्लेषघनाः सुजातयो
महास्रजश्चम्पककुड्मलैरिव ॥ ९ ॥

बभूव वात्स्यायनवंशसंभवो
द्विजो जगद्गीतगुणोऽग्रणीः सताम् ।
अनेकगुप्तार्चितपादपङ्कजः
कुबेरनामांश इव स्वयंभुवः ॥ १० ॥

उवास यस्य श्रुतिशान्तकल्मषे
सदा पुरोडाशपवित्रिताधरे ।
सरस्वती सोमकषायितोदरे
समस्तशास्त्रस्मृतिबन्धुरे मुखे ॥ ११ ॥

जगुर्गृहेऽभ्यस्तसमस्तवाङ्मयैः
ससारिकैः पञ्जरवर्तिभिः शुकैः ।
निगृह्यमाणा बटवः पदे पदे
यजूंषि सामानि च यस्य शङ्किताः ॥ १२

हिरण्यगर्भो भुवनाण्डकादिव
क्षपाकरः क्षीरमहार्णवादिव ।
अभूत्सुपर्णो विनतोदरादिव
द्विजन्मनामर्थपतिः पतिस्ततः ॥ १३ ॥

विवृण्वतो यस्य विसारि वाङ्मयं
दिने दिने शिष्यगणा नवा नवाः ।
उषस्सु लग्नाः श्रवणेऽधिकां श्रियं
प्रचक्रिरे चन्दनपल्लवा इव ॥ १४ ॥

विधानसंपादितदानशोभितैः
स्फुरन्महावीरसनाथमूर्तिभिः ।
मखैरसंख्यैरजयत्सुरालयं
सुखेन यो यूपकरैर्गजैरिव ॥ १५ ॥

स चित्रभानुं तनयं महात्मनां
सुतोत्तमानां श्रुतिशास्त्रशालिनाम् ।
अवाप मध्ये स्फटिकोपलोपमं
क्रमेण कैलासमिव क्ष्माभृताम् ॥ १६ ॥

महात्मनो यस्य सुदूरनिर्गताः
कलङ्कमुक्तेन्दुकलामलत्विषः ।
द्विषन्मनःप्राविविशुः कृतान्तरा
गुणा नृसिंहस्य नखाङ्कुरा इव ॥ १७ ॥

दिशामलीकालकभङ्गतां गत-
स्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसंचयो
मलीमसः शुक्लतरं निजं यशः ॥ १८ ॥

सरस्वतीपाणिसरोजसंपुट-
प्रमृष्टहोमश्रमसीकराम्भसः ।
यशोंशुशुक्लीकृतसप्तविष्टपा-
त्ततः सुतो बाण इति व्यजायत ॥ १९ ॥

द्विजेन तेनाक्षतकण्ठकौण्ठ्यया
महामनोमोहमलीमसान्धया ।
अलब्धवैदग्ध्यविलासमुग्धया
धिया निबद्धेयमतिद्वयी कथा ॥ २० ॥

आसीदशेषनरपतिशिरःसमभ्यर्चितशासनः पाकशासन इवापरश्चतुरुदधिमालामेखलाया भुवो भर्ता प्रतापानुरागावनतसमस्तसामन्तचक्रश्चक्रवर्तिलक्षणोपेतश्चक्रधर इव करकमलोपलक्ष्यमाणशङ्खचक्रलाञ्छनो हर इव जितमन्मथो गुह इवाप्रतिहतशक्तिः कमलयोनिरिव विमानीकृतराजहंसमण्डलो जलधिरिव लक्ष्मीप्रसूतिर्गङ्गाप्रवाह इव भगीरथपथप्रवृत्तो रविरिव प्रतिदिवसोपजायमानोदयो मेरुरिव सकलभुवनोपजीव्यमानपादच्छायो दिग्गज इवानवरतप्रवृत्तदानार्द्रीकृतकरः कर्ता महाश्चर्याणामाहर्ता क्रतूनामादर्शः सर्वशास्त्राणामुत्पत्तिः कलानां कुलभवनं गुणानामागमः काव्यामृतरसानामुदयशैलो मित्रमण्डलस्योत्पातकेतुरहितजनस्य प्रवर्तयिता गोष्ठीबन्धानामाश्रयो रसिकानां प्रत्यादेशो धनुष्मतां धौरेयः साहसिकानामग्रणीर्विदग्धानां वैनतेय इव विनतानन्दजननो वैन्य इव चापकोटिसमुत्सारितसकलारातिकुलाचलो राजा शूद्रको नाम ।

नाम्नैव यो निर्भिन्नारातिहृदयो विरचितनारसिंहरूपाडम्बरमेकविक्रमाक्रान्तसकलभुवनतलो विक्रमत्रयायासितं च जहासेव वासुदेवम् । अतिचिरकाललग्नमतिक्रान्तकुनृपतिसहस्रसंपर्ककलङ्कमिव क्षालयन्ती यस्य विमले कृपाणधाराजले चिरमुवास राजल-

क्ष्मीः । यश्च मनसि धर्मेण कोपे यमेन प्रसादे धनदेन प्रतापे वह्निना भुजे भुवा दृशि श्रिया वाचि सरस्वत्या मुखे शशिना बले मरुता प्रज्ञायां सुरगुरुणा रूपे मनसिजेन तेजसि सवित्रा च वसता सर्वदेवमयस्य प्रकटितविश्वरूपाकृतेरनुकरोति भगवतो नारायणस्य । यस्य च
5 मदकलकरिकुम्भपीठपाटनमाचरतो लग्नस्थूलमुक्ताफलेन दृढमुष्टिनिपीडनान्निष्ठ्यूतधाराजलबिन्दुदन्तुरेणेव कृपाणेनाकृष्यमाणा सुभटोरःकपाटविघटितकवचसहस्रान्धकारमध्यवर्तिनी करिकरटतटगलितमदजलासारदुर्दिनास्वभिसारिकेव समरनिशासु समीपमसकृदाजगाम राजलक्ष्मीः । यस्य च हृदयस्थितानपि पतीन्दिधक्षुरिव प्रतापानलो वियोगिनीनामपि
10 रिपुसुन्दरीणामन्तर्जनितदाहो दिवानिशं जज्वाल । यस्मिंश्च राजनि जितजगति परिपालयति महीं चित्रकर्मसु वर्णसंकरा रतेषु केशग्रहाः काव्येषु दृढबन्धाः शास्त्रेषु चिन्ता स्वप्नेषु विप्रलम्भाश्छत्रेषु कनकदण्डा ध्वजेषु प्रकम्पा गीतेषु रागविलसितानि करिषु मदविकाराश्चापेषु गुणच्छेदा गवाक्षेषु जालमार्गाः शशिकृपाणकवचेषु कलङ्का रतिकलहेषु दू-
15 तसंप्रेषणानि शार्यक्षेषु शून्यगृहाः प्रजानामासन् । यस्य च परलोकाद्भयमन्तःपुरिकालकेषु भङ्गो नूपुरेषु मुखरता विवाहेषु करग्रहणमनवरतमखाग्निधूमेनाश्रुपातस्तुरंगेषु कशाभिघातो मकरध्वजे चापध्वनिरभूत् ।

तस्य च राज्ञः कलिकालभयपुञ्जीभूतकृतयुगानुकारिणी त्रिभुवनप्रस-
20 वभूमिरिव विस्तीर्णा मज्जन्मालवविलासिनीकुचतटास्फालनजर्जरितोर्मिमालया जलावगाहनायातजयकुञ्जरकुम्भसिन्दूरसंध्यायमानसलिलयोन्मदकलहंसकुलकोलाहलमुखरितकूलया वेत्रवत्या सरिता परिगता विदिशाभिधाना नगरी राजधान्यासीत् ।

लम्बितस्थू जिताशेषभुवनमण्डलतया विगतराज्यचिन्ताभारनि-
ग्रस्य गर्वानेकभूमिपालमौलिमालीलालितचरणयुगलो वलय-
ाधस्तादिन्द्रजेन भुवनभारमुद्वहन्नमरगुरुमपि प्रज्ञयोपहसद्भि-
न्मन्मयूरसकृदालोचितनीतिशास्त्रनिर्मलमनोभिरलुब्धैः स्निग्धैः
विनीतैः परिवृतः समानवयोविद्यालंकारैरनेकमूर्धाभिषिक्तपार्थि- 5
नैर्सकलाकलापालोचनकठोरमतिभिरतिप्रगल्भैः कालविद्भिः
ता हृदयैरग्राम्यपरिहासकुशलैरिङ्गिताकारवेदिभिः काव्यनाट-
ख्यायिकालेख्यव्याख्यानादिक्रियानिपुणैरतिकठिनपीवरस्क-
भरसकृदवदलितसमदरिपुगजघटापीठबन्धैः केसरिकिशोरकै-
मैकरसैरपि विनयव्यवहारिभिरात्मनः प्रतिबिम्बैरिव रा- 10
सह रममाणः प्रथमे वयसि सुखमतिचिरमुवास । तस्य
वैजिगीषुतया महासत्त्वतया च तृणमिव लघुवृत्ति स्त्रैणमाक-
ः प्रथमे वयसि वर्तमानस्यापि रूपवतोपि संतानार्थिभिरमा-
क्षितस्यापि सुरतसुखस्योपरि द्वेष इवासीत् । सत्यपि रूप-
सोपहसितरतिविभ्रमे लावण्यवति विनयवत्यन्वयवति हृदय- 15
णि चावरोधजने स कदाचिदनवरतदोलायमानरत्नवलयो घर्ष-
स्फालनप्रकम्पझणझणायमानमणिकर्णपूरः स्वयमारब्धमृदङ्गवाद्यः
तकप्रसङ्गेन कदाचिदविरलविमुक्तशरासारशून्यीकृतकाननो मृग-
ापारेण कदाचिदाबद्धविदग्धमण्डलः काव्यप्रबन्धरचनेन कदा-
छास्त्रालापेन कदाचिदाख्यानकाख्यायिकेतिहासपुराणाकर्णनेन क- 20
दालेख्यविनोदेन कदाचिद्वीणया कदाचिद्दर्शनागतमुनिजनचर-
ूषया कदाचिदक्षरच्युतकमात्राच्युतकबिन्दुमतीगूढचतुर्थपादप्रहे-
प्रदानादिभिर्वनितासंभोगसुखपराङ्मुखः सुहृत्परिवृतो दिवसमन-

। प्रतापे वन्हिना बले मरुता प्र-

यत् । यथैव च दिवसमेवमारब्धविविधक्रीडापरिहासरसता सर्वदेवम-

पेतो निशामनैषीत् । स्य । यस्य च

एकदा तु नातिदूरोदिते नवनलिनदलसंपुटभिदि ईढमुष्टिनिपीड-

पाटलिम्नि भगवति सहस्रमरीचिमालिनि राजानमभ्यटोरःकपाट-

5 तमङ्गनाजनविरुद्धेन वामपार्श्वावलम्बिना कौक्षेयकेण मदजलासार-

षधरेव चन्दनलता भीषणरमणीयाकृतिरविरलचन्दनाजलक्ष्मीः ।

तस्तनतटोन्मज्जदैरावतकुम्भमण्डलेव मन्दाकिनी चूडामणीनामपि

म्बच्छलेन राजाज्ञेव मूर्तिमती राजभिः शिरोभिरुह्यमाना राजनि

दिव कलहंसधवलाम्बरा जामदग्न्यपरशुधारेव वशीकृतशत्रुसहा-

10 जमण्डला विन्ध्यवनभूमिरिव वेत्रलतावती राज्याधिदेवतेव दण्डा

हिणी प्रतीहारी समुपसृत्य क्षितितलनिहितजानुकरकमला सगुण-

विनयमब्रवीत् । देव द्वारस्थिता सुरलोकमारोहतस्त्रिशङ्कोरिव दू-

पितृशतमखहुंकारनिपातिता राजलक्ष्मीर्दक्षिणापथादागता चाण्डा-

कन्यका पञ्जरस्थं शुकमादाय देवं विज्ञापयति । सकलभुवनतल-

15 सर्वरत्नानामुदधिरिवैकभाजनं देवो विहंगमश्चायमाश्चर्यभूतो निखि-

लभुवनतलरत्नमिति कृत्वा देवपादमूलमादायागताहमिच्छामि देवद-

र्शनसुखमनुभवितुमिति । एतदाकर्ण्य देवः प्रमाणम् । इत्युक्त्वा वि-

रराम । उपजातकुतूहलस्तु राजा समीपवर्तिनां राज्ञामालोक्य मु-

खानि को दोषः प्रवेश्यतामित्यादिदेश ।

20 अथ प्रतीहारी नरपतिवचनानन्तरमुत्थाय तां मातङ्गकुमारीं प्रा-

वेशयत् । प्रविश्य च सा नरपतिसहस्रमध्यवर्तिनमशनिभयपुञ्जित-

कुलशैलमध्यगतमिव कनकशिखरिणमनेकरत्नाभरणकिरणजालका-

लम्बितस्थूलमुक्ताकलापस्य कनकशृङ्खलानियमितमणिदण्डिका-
यस्य गगनसिन्धुफेनपटलपाण्डुरस्य नातिमहतो दुकूलवि-
स्याधस्तादिन्दुकान्तमणिपर्यङ्किकानिषण्णमुद्धूयमानकनकदण्डचाम-
न्मन्मयूखमुखकान्तिविजयपराभवप्रणते शशिनीव स्फटिक-
विन्यस्तवामपादमिन्द्रनीलमणिकुट्टिमप्रभासंपर्कश्यामायमानैः 5
श्वासमलिनीकृतैरिव चरणनखमयूखजालैरुपशोभमानमा-
तपद्मरागकिरणपाटलीकृतेनाचिरमृदितमधुकैटभरुधिरारुणेन
युगलेन विराजमानममृतफेनधवले गोरोचनालिखितहंस-
थपर्यन्ते चारुचामरपवनप्रनर्तितदशे दुकूले वसानम-
न्दनानुलेपनधवलितोरःस्थलमुपरिविन्यस्तकुङ्कुमस्थासकमन्त- 10
तितबालातपच्छेदमिव कैलासशिखरिणमपरशशिशङ्कया
येव हारलतया कृतमुखपरिवेषमतिचपलराजलक्ष्मीबन्ध-
कशङ्कामुपजनयतेन्द्रनीलकेयूरयुगलेन मलयजरसगन्धलु-
ंगद्वयेनेव वेष्टितबाहुशिखरमीषदालम्बिकर्णोत्पलमुन्नतघो-
डरीकलोचनममलकलधौतपट्टायतमष्टमीचन्द्रशकलाकारमशे- 15
वनराज्याभिषेकसलिलपूतमूर्णासनाथं ललाटदेशमुद्वहन्तमामोदि-
लतीकुसुमशेखरमुषसि शिखरपर्यस्ततारकापुञ्जमिव पश्चिमाच-
ाभरणप्रभापिशङ्गिताङ्गतया लग्नहरहुताशमिव मकरध्वजमा-
वर्तिनीभिः सर्वतः सेवार्थमागताभिरिव दिग्वधूभिर्वारविला-
नीभिः परिवृतममलमणिकुट्टिमसंक्रान्तसकलदेहप्रतिबिम्बतया प- 20
गा वसुंधरया हृदयेनेवोह्यमानमशेषजनभोग्यतामुपनीतयाप्यसा-
या राजलक्ष्म्या समालिङ्गितदेहमपरिमितपरिवारजनमप्यद्विती-
तगजतुरगसाधनमपि खड्गमात्रसहायमेकदेशस्थितमपि व्याप्त-

भुवनमण्डलमासन्नगतमपि धनुषि निषण्णमुत्सादिताशेषद्विषामपि ज्वलत्प्रतापानलमायतलोचनमपि सूक्ष्मदर्शनं महादोषमपि सकलगुणाधिष्ठानं कुपतिमपि कलत्रवल्लभमविरतप्रवृत्तदानमप्यमदं शुद्धस्वभावमपि कृष्णचरितमकरमपि हस्तस्थितसकलभुवनतलं
5 राजानमद्राक्षीत्।

आलोक्य च सा दूरस्थितैव प्रचलितरत्नवलयेन रक्तकुवलयकोमलेन पाणिना जर्जरितमुखभागां वेणुलतामादाय नरपतिः। नार्थमसकृत्सभाकुट्टिममाजघान। येन सकलमेव तद्राजकमेकपदे करियूथमिव तालशब्देन तेन वेणुलताध्वनिना युगपदावर्तितवदनं
10 अवनिपालमुखादाकृष्य चक्षुस्तदभिमुखमासीत्।

अवनिपतिस्तु दूरादालोकयेत्यभिधाय प्रतीहार्या निर्दिष्टां तां वयःपरिणामपाण्डुरशिरसा रक्तराजीवेक्षणापाङ्गेनानवरतगुणव्यायामतया यौवनापगमेऽप्यशिथिलशरीरसंधिना सत्यपि मृदूनातिनृशंसाकृतिनानुगृहीतार्यवेषेण धवलवाससा पुरुषेणाधिष्ठिताग्र-
15 भागामाकुलाकुलकाकपक्षधारिणा कनकशलाकानिर्मितमप्यन्तःशुककप्रभाश्यामायमानं मरकतमयमिव पञ्जरमुद्वहता चाण्डालदारकेणानुगम्यमानामसुरगृहीतामृतापहरणकृतकपटपटुविलासिनीवेषस्य श्यामतया भगवतो हरेरिवानुकुर्वतीं संचारिणीमिवेन्द्रनीलमणिपुत्रिकामागुल्फावलम्बिना नीलकञ्चुकेनावच्छन्नशरीरामुपरि रक्तांशुक-
20 रचितावगुण्ठनां नीलोत्पलस्थलीमिव निपतितसंध्यातपामेककर्णावसक्तदन्तपत्त्रप्रभाधवलितकपोलमण्डलामुद्यदिन्दुकिरणच्छुरितमुखीं प्रावृषमिव विभावरीमाकपिलगोरोचनारचिततिलकतृतीयलोचनां ईशानरचितानुरचितकिरातवेषामिव भवानीमुरःस्थलनिवाससंक्रान्त-

श्रायणदेहप्रभाश्यामलितामिव श्रियं कुपितहरहुताशनदह्यमानमदनधूममलिनीकृतामिव रतिमुन्मदहलिहलापकर्षणभयप्रपलायितामिव यमुनामतिबहलपिण्डालक्तकरसरागपल्लवितपादपङ्कजामचिरमृदितमहिषासुररुधिररक्तचरणामिव कात्यायनीमालोहिताङ्गुलिप्रभापाटलितनखमयूखामतिकठिनमणिकुट्टिमस्पर्शमसहमानां क्षितितले पल्लवभङ्गा- 5
निव निधाय संचरन्तीमापिञ्जरेणोत्सर्पिणा नूपुरमणीनां प्रभाजालेन रञ्जितशरीरतया पावकेनेव भगवता रूप एव पक्षपातिना प्रजापतिमप्रमाणीकुर्वता जातिसंशोधनार्थमालिङ्गितदेहामनङ्गवारणशिरोनक्षत्रमालायमानेन रोमराजिलतालवालकेन मेखलादाम्ना परिगतजघनस्थलामतिस्थूलमुक्ताफलघटितेन शुचिना हारेण गङ्गास्रो- 10
तसेव कालिन्दीशङ्कया कृतकण्ठग्रहां शरदमिव विकसितपुण्डरीकलोचनां प्रावृषमिव घनकेशजालां मलयमेखलामिव चन्दनपल्लवावतंसां नक्षत्रमालामिव चित्रश्रवणाभरणभूषितां श्रियमिव हस्तस्थितकमलशोभां मूर्छामिव मनोहारिणीमरण्यभूमिमिवाक्षतरूपसंपन्नां दिव्ययोषितमिवाकुलीनां निद्रामिव लोचनग्राहिणी- 15
मरण्यकमलिनीमिव मातङ्गकुलदूषिताममूर्तामिव स्पर्शवर्जितामालेख्यगतामिव दर्शनमात्रफलां मधुमासकुसुमसमृद्धिमिव विजातिमनङ्गकुसुमचापलेखामिव मुष्टिग्राह्यमध्यां यक्षाधिपलक्ष्मीमिवालकोद्भासिनीमचिरोपरूढयौवनामतिशयरूपाकृतिमनिमेषलोचनो ददर्श।

समुपजातविस्मयस्य चाभून्मनसि महीपतेः। अहो विधातुरस्थाने 20
रूपनिष्पादनप्रयत्नः। तथाहि। यदि नामेयमात्मरूपोपहसिताशेषरूपसंपदुत्पादिता किमर्थमपगतस्पर्शसंभोगसुखे कृतं कुले जन्म। मन्ये च मातङ्गजातिस्पर्शदोषभयादस्पृशतेयमुत्पादिता प्रजापतिना। अन्यथा क-

थमियमक्लिष्टता लावण्यस्य। न हि करतलस्पर्शक्लेशितानामवयवानामीदृशी भवति कान्तिः। सर्वथा धिग्विधातारमसदृशसंयोगकारिणमतिमनोहराकृतिरपि क्रूरजातितया येनेयमसुरश्रीरिव सततनिन्दितसुरता रमणीयाप्युद्वेजयति। इत्येवमादि चिन्तयन्तमेव राजानमी-
5 षद्वसलितकर्णपल्लवावतंसा प्रगल्भवनितेव कन्यका प्रणनाम। कृतप्रणामायां च तस्यां मणिकुट्टिमोपदिष्टायां स पुरुषस्तं विहंगमादाय पञ्जरगतमेव किंचिदुपसृत्य राज्ञे न्यवेदयदब्रवीच्च। देव विदितसकलशास्त्रार्थो राजनीतिप्रयोगकुशलः पुराणेतिहासकथालापनिपुणो वेदिता गीतश्रुतीनां काव्यनाटकाख्यायिकाख्यानकप्रभृतीनामपरिमितानां सु-
10 भाषितानामध्येता स्वयं च कर्ता परिहासालापपेशलो वीणावेणुमुरजप्रभृतीनां वाद्यविशेषाणामसमः श्रोता नृत्तप्रयोगदर्शननिपुणश्चित्रकर्मणि प्रवीणो द्यूतव्यापारे प्रगल्भः प्रणयकलहकुपितकामिनीप्रसादनोपायचतुरो गजतुरगपुरुषस्त्रीलक्षणाभिज्ञः सकलभूतलरत्नभूतोयं वैशम्पायनो नाम शुकः सर्वरत्नानां चोदधिरिव देवो भाजनमिति
15 कृत्वैनमादायास्मत्स्वामिदुहिता देवपादमूलमायाता। तदयमात्मीयः क्रियताम्। इत्युक्त्वा नरपतेः पुरो निधाय पञ्जरमसावपससार।

अपसृते च तस्मिन्स विहंगराजो राजाभिमुखो भूत्वा समुन्नमय्य दक्षिणं चरणमतिस्पष्टवर्णस्वरसंस्कारया गिरा कृतजयशब्दो राजानमुद्दिश्यार्यामिमां पपाठ।

20 स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम्॥

राजा तु तां श्रुत्वा संजातविस्मयः सहर्षमासन्नवर्तिनमतिमहार्हहेमासनोपविष्टममरगुरुमिवाशेषनीतिशास्त्रपारगमतिवयसमग्रजन्मानम-

खिलमन्त्रिमण्डले प्रधानममात्यं कुमारपालितनामानमब्रवीत् । श्रुता भवद्भिरस्य विहंगमस्य स्पष्टता वर्णोच्चारणे स्वरे च मधुरता। प्रथमं तावदिदमेव महदाश्चर्यमसंकीर्णवर्णप्रविभागामभिव्यक्तमात्रानुस्वारसंस्कारयोगां विशेषसंयुक्तां यदयमतिपरिस्फुटाक्षरां गिरमुदीरयति । तत्र पुनरपरमभिमतविषये तिरश्चोपि मनुजस्येव संस्कारवतो बुद्धिपूर्वा प्रवृत्तिः। तथा हि । अनेन समुत्क्षिप्तदक्षिणचरणेनोच्चार्य जयशब्दमियमार्या मामुद्दिश्यातिस्फुटाक्षरं गीता । प्रायेण हि पक्षिणः पशवश्च भयाहारमैथुननिद्रासंज्ञामात्रवेदिनो भवन्ति। इदं तु महच्चित्रम् । इत्युक्तवति भूभुजि कुमारपालितः किंचित्स्मितवदनो नृपमवादीत्। देव किमत्र चित्रम्। एते हि शुकसारिकाप्रभृतयो विहंगमविशेषा यथाश्रुतां वाचमुच्चारयन्तीत्यधिगतमेव देवेन । तत्राप्यन्यजन्मोपात्तसंस्कारानुबन्धेन वा पुरुषप्रयत्नेन वा संस्कारातिशय उपजायत इति नातिचित्रम्। अन्यदेतेषामपि पुरा पुरुषाणामिवातिपरिस्फुटाभिधाना वागासीत् । अग्निशापात्त्वपरिस्फुटालापता शुकानामुपजाता करिणां च जिह्वापरिवृत्तिः । इत्येवमुच्चारयत्येव तस्मिन्नशिशिरकिरणमम्बरतलस्य मध्यमारूढमावेदयन्नाडिकाच्छेदप्रहतपटुपटहनादानुसारी मध्याह्नशङ्खध्वनिरुदतिष्ठत् । तमाकर्ण्य च समासन्नस्नानसमयो विसर्जितराजलोकः क्षितिपतिरास्थानमण्डपादुत्तस्थौ ।

अथ चलति महीपतावन्योन्यमतिरभससंचलनचालिताङ्गदपत्त्रभङ्गमकरकोटिपाटितांशुकपटानामाक्षेपदोलायमानकण्ठदाम्नामंसस्थलोल्लसितकुङ्कुमपटवासधूलिपिञ्जरितदिशामालोलमालतीकुसुमशेखरोत्पतदलिकदम्बकानामर्धावलम्बिभिः कर्णोत्पलैश्चुम्ब्यमानगण्डस्थलानां गम-

नप्रणामलालसानामहमहमिकया वक्षःस्थलप्रेङ्खोलितहारलतानामुत्तिष्ठ-
तामासीदतिमहान्संभ्रमो महीपतीनाम् । इतश्चेतश्च निष्पतन्तीनां
स्कन्धदशावसक्तचामराणां चामरग्राहिणीनां कमलमधुपानमत्तजर-
त्कलहंसनादजर्जरेण पदे पदे प्रणितमणीनां मणिनूपुराणां निनादेन
5 वारविलासिनीजनस्य संचरतो जघनस्थलास्फालनरसितरत्नमालिकानां
मेखलानां मनोहारिणा झंकारेण नूपुररवाकृष्टानां च धवलितास्था-
नमण्डपसोपानफलकानां भवनदीर्घिकाकलहंसकानां कोलाहलेन र-
सनारसितोत्सुकितानां च तारतरविराविणामुल्लिख्यमानकांस्यक्रेंका-
रदीर्घेण गृहसारसानां कूजितेन सरभसप्रचलितसामन्तशतचरणत-
10 लाभिहतस्य चास्थानमण्डपस्य निर्घातनिर्घोषगम्भीरेण कम्पयतेव
वसुमतीं ध्वनिना प्रतीहारिणां च पुरः ससंभ्रमं समुत्सारितजना-
नां दण्डिनां समारब्धहेलमुच्चैरुच्चारयतामालोकयतालोकयतेति तार-
तरदीर्घेण भवनप्रासादकुञ्जेषूच्चरितप्रतिशब्दतया दीर्घतामुपगतेनालो-
कशब्देन राज्ञां च ससंभ्रमावर्जितमौलिलोलचूडामणीनां प्रणम-
15 ताममलमणिशलाकादन्तुराभिः किरीटकोटिभिरुल्लिख्यमानस्य मणि-
कुट्टिमस्य स्वनेन प्रणामपर्यस्तानामतिकठिनमणिकुट्टिमनिपतितरण-
रणायितानां च मणिकर्णपूराणां निनादेन मङ्गलपाठकानां च पुरो-
यायिनां जय जीवेति मधुरवचनानुयातेन पठतां दिगन्तव्यापिना क-
लकलेन प्रचलितजनचरणशतसंक्षोभभयादपहाय कुसुमप्रकरमुत्प-
20 ततां च मधुलिहां हुंकृतेन संक्षोभादतित्वरितपदप्रवृत्तैरवनिपतिभिः
केयूरकोटिताडितानां क्वणितमुखररत्नदाम्नां च मणिस्तम्भानां रणितेन
सर्वतः क्षुभितमिव तदास्थानभवनमभवत् ।

अथ विसर्जितराजलोको विश्रम्यतामिति स्वयमेवाभिधाय तां

चाण्डालकन्यकां वैशम्पायनः प्रवेशयतामभ्यन्तरमिति ताम्बूल-करङ्कवाहिनीमादिश्य कतिपयाप्तराजपुत्रपरिवृतो नरपतिरभ्यन्तरं प्राविशत्। अपनीताशेषभूषणश्च दिवसकर इव विगलितकिरणजालश्चन्द्रतारकासमूहशून्य इव गगनाभोगः समुपाहृतसमुचितव्यायामोपकरणां व्यायामभूमिमयासीत्। स तस्यां च समानवयोभिः 5 सह राजपुत्रैः कृतमधुरव्यायामः श्रमवशादुन्मिषन्तीभिः कपोलयोरीषदवदलितसिन्धुवारकुसुममञ्जरीविभ्रमाभिरुरसि निर्दयश्रमच्छिन्नहारविगलितमुक्ताफलप्रकरानुकारिणीभिर्ललाटपट्टकेऽष्टमीचन्द्रशकलतलोल्लसदमृतबिन्दुविडम्बिनीभिः स्वेदजलकणिकासंततिभिरलंक्रियमाणमूर्तिरितस्ततः स्नानोपकरणसंपादनसत्वरेण पुरः प्रधा- 10 वता परिजनेन तत्कालं विरलजनेपि राजकुले समुत्सारणाधिकारमुचितमाचरद्भिर्दण्डिभिरुपदिश्यमानमार्गो विततसितवितानामनेकचारणगणावबध्यमानमण्डला गन्धोदकपूर्णकनकमयजलद्रोणासनाथमध्यामुपस्थापितस्फाटिकस्नानपीठामेकान्तनिहितैरतिसुरभिगन्धसलिलपूर्णैः परिमलावकृष्टमधुकरकुलान्धकारितमुखैरातपभयान्नीलकर्पटा- 15 वगुण्ठितमुखैरिव स्नानकलशैरुपशोभितां स्नानभूमिमगच्छत्। अवतीर्णस्य जलद्रोण्यां वारविलासिनीकरमृदितसुगन्धामलकोपलिप्तशिरसो राज्ञः समन्तात्समुपतस्थुरंशुकनिबिडनिबद्धस्तनपरिकरा दूरसमुत्सारितवलयबाहुलताः समुत्क्षिप्तकर्णाभरणाः कर्णोत्सङ्गोत्सारितालका गृहीतजलकलशाः स्नानार्थमभिषेकदेवता इव वारयो- 20 षितः। ताभिश्च समुन्नतकुचकुम्भमण्डलाभिर्वारिमध्यप्रविष्टः करिणीभिरिव वनकरी परीवृतस्तत्क्षणं राजा रराज। जलद्रोणीसलिलादुत्थाय च स्नानपीठममलस्फटिकधवलं वरुण इव राजहंसमा-

रुरोह। ततस्ताः काश्चिन्मरकतकलशप्रभाश्यामायमाना नलिन्य इव मूर्तिमत्यः पत्रपुटैः काश्चिद्रजतकलशहस्ता रजन्य इव पूर्णचन्द्रमण्डलविनिर्गतेन ज्योत्स्नाप्रवाहेण काश्चित्कलशोत्क्षेपश्रमस्वेदार्द्रशरीरा जलदेवता इव स्फाटिकैः कलशैस्तीर्थजलेन काश्चिन्मलयसरित इव चन्दनरसमिश्रेण सलिलेन काश्चिदुत्क्षिप्तकलशपार्श्वविन्यस्तहस्तपल्लवाः प्रकीर्यमाणनखमयूखजालकाः प्रत्यङ्गुलिविवरविनिर्गतजलधाराः सलिलयन्त्रदेवता इव काश्चिज्जाड्यमपनेतुमाक्षिप्तबालातपेनेव दिवसश्रिय इव कनककलशहस्ताः कुङ्कुमजलेन वाराङ्गनाः क्रमेण राजानमभिषिषिचुः। अनन्तरमुदपादि च स्फोटयन्निव श्रुतिपथमनेकप्रहतपटुपटहझल्लरीमृदङ्गवेणुवीणागीतनिनादानुगम्यमानो बन्दिवृन्दकोलाहलाकुलो भुवनविवरव्यापी स्नानशङ्खानामापूर्यमाणानामतिमुखरो ध्वनिः।

एवं च क्रमेण निर्वर्तिताभिषेको विषधरनिर्मोकपरिलघुनी धवले परिधाय धौतवाससी शरदम्बरैकदेश इव जलक्षालनविमलतनुरतिधवलजलधरच्छेदशुचिना दुकूलपटपल्लवेन तुहिनगिरिरिव गगनसरित्स्रोतसा कृतशिरोवेष्टनः संपादितपितृजलक्रियो मन्त्रपूतेन तोयाञ्जलिना दिवसकरमभिप्रणम्य देवगृहमगमत्। उपरचितपशुपतिपूजनश्च निष्क्रम्य देवगृहान्निर्वर्तिताग्निकार्यो विलेपनभूमौ झंकारिभिरलिकदम्बकैरनुबध्यमानपरिमलेन मृगमदकर्पूरकुङ्कुमवाससुरभिणा चन्दनेनानुलिप्तसर्वाङ्गो विरचितामोदिमालतीकुसुमशेखरः कृताम्बरपरिवर्तो रत्नकर्णपूरमात्राभरणः समुचितभोजनैः सह भूपतिभिराहारमभिमतरसास्वादजातप्रीतिरवनिपो निर्वर्तयामास।

परिपीतधूपधूमवर्तिरुपस्पृश्य च गृहीतताम्बूलस्तस्मात्प्रमृष्टमणि-

कुट्टिमात्प्रदेशादुत्थाय नातिदूरवर्तिन्या ससंभ्रमप्रधावितया प्रतीहार्या प्रसारितबाहुमवलम्ब्यानवरतवेत्रलताग्रहणप्रसङ्गातिजरठकिसलयानुकारिकरतलकरेणाभ्यन्तरसंचारसमुचितेन परिजनेनानुगम्यमानो धवलांशुकजवनिकापरिगतपर्यन्ततया स्फटिकमणिमयभित्तिबद्धमिवोपलक्ष्यमाणमतिसुरभिणा मृगनाभिपरिगतेनामोदिना चन्दनवारिणा 5 सिक्तशिशिरमणिभूमिमविरलविप्रकीर्णेन विमलमणिकुट्टिमगगनतलतारागणेनेव कुसुमोपहारेण निरन्तरनिचितमुत्कीर्णशालभञ्जिकानिवहेन संनिहितगृहदेवतेनेव गन्धसलिलक्षालितेन कलधौतमयेन स्तम्भसंचयेन विराजमानमतिबहलागुरुधूपपरिमलमखिलविगलितजलनिवहधवलजलधरशकलानुकारिणा कुसुमामोदवासितप्रच्छदपटेन 10 पट्टोपधानाध्यासितशिरोधाम्ना मणिमयप्रतिपादुकाप्रतिष्ठितपादेन पार्श्वस्थरत्नपादपीठेन तुहिनगिरिशिलातलसदृशशयनेन सनाथीकृतवेदिकं भुक्त्वास्थानमण्डपमयासीत् । तत्र च शयनतलनिषण्णः क्षितितलोपविष्टया शनैः शनैरुत्सङ्गनिहितासिलतया खड्गवाहिन्या नवनलिनदलकोमलेन करसंपुटेन संवाह्यमानचरणस्तत्कालोचितदर्शनैरवनिपतिभि- 15 रमात्यैर्मित्रैश्च सह तास्ताः कथाः कुर्वन्मुहूर्तमिवासांचक्रे । ततो नातिदूरवर्तिनीमन्तःपुराद्वैशम्पायनमादायागच्छेति समुपजाततद्वृत्तान्तप्रश्नकुतूहलो राजा प्रतीहारीमादिदेश । सा क्षितितलनिहितजानुकरतला यथाज्ञापयति देव इति शिरसि कृत्वाज्ञां यथादिष्टमकरोत् ।

अथ मुहूर्तादिव वैशम्पायनः प्रतीहार्या गृहीतपञ्जरः कनकवेत्र- 20 लतावलम्बिना किंचिदवनतपूर्वकायेन सितकञ्चुकावच्छन्नवपुषा जराधवलितमौलिना गद्गदस्वरेण मन्दमन्दसंचारिणा विहंगजातिप्रीत्या जरत्कलहंसेनेव कञ्चुकिनानुगम्यमानो राजान्तिकमाजगाम । क्षितित-

लनिहितकरतलस्तु कञ्चुकी राजानं व्यज्ञापयत्। देव देव्यो विज्ञापयन्ति। देवादेशादेष वैशम्पायनः स्नातः कृताहारश्च देवपादमूलं प्रतीहार्यानीतः। इत्यभिधाय गते च तस्मिन्राजा वैशम्पायनमपृच्छत्। कच्चिदभिमतमास्वादितमभ्यन्तरे भवता किंचिदशनजातमिति। स
5 प्रत्युवाच। देव किं वा नास्वादितम्। आमत्तकोकिललोचनच्छविनीलपाटलः कषायमधुरः प्रकाममापीतो जम्बूफलरसः। हरिनखरभिन्नमत्तमातङ्गकुम्भमुक्तरक्तार्द्रमुक्ताफलत्विषि खण्डितानि दाडिमबीजानि। नलिनीदलहरिन्ति द्राक्षाफलस्वादूनि च दलितानि स्वेच्छया प्राचीनामलकीफलानि। किं वा प्रलपितेन बहुना। सर्वमेव
10 देवीभिः स्वयं करतलोपनीयमानममृतायते। इत्येवंवादिनो वचनमाक्षिप्य नरपतिरब्रवीत्। आस्तां तावत्सर्वमेवेदम्। अपनयतु नः कुतूहलम्। आवेदयतु भवानादितः प्रभृति कार्त्स्न्येनात्मनो जन्म कस्मिन्देशे। भवान्कथं जातः। केन वा नाम कृतम्। का माता। कस्ते पिता। कथं वेदानामागमः। कथं शास्त्राणां परिचयः। कुतः कलाः
15 समासादिताः। किं जन्मान्तरानुस्मरणमुत वरप्रदानम्। अथवा विहंगवेषधारी कश्चिच्छन्नं निवससि। क्व वा पूर्वमुषितम्। कियद्वा वयः। कथं पञ्जरबन्धः। कथं चाण्डालहस्तगमनम्। इह वा कथमागमनमिति। वैशम्पायनस्तु स्वयमुपजातकुतूहलेन सबहुमानमवनिपतिना पृष्टो मुहूर्तमिव ध्यात्वा सादरमब्रवीत्। देव महतीयं
20 कथा। यदि कौतुकमाकर्ण्यताम्।

• अस्ति पूर्वापरजलनिधिवेलावनलग्ना मध्यदेशालंकारभूता मेखलेव भुवो, वनकरिकुलमदजलसेकसंवर्धितैरतिविकचधवलकुसुमनिकरमत्युन्नतया तारागणमिव शिखरदेशलग्नमुद्वहद्भिः पादपैरुपशोभिता मदकलकुररकुलदश्यमानमरिचपल्लवा करिकलभकरमृदिततमालकिसलयामोदिनी मधुमदोपरक्तकेरलीकपोलकोमलच्छविना संचरद्वनदेवताचरणालक्तकरसरञ्जितेनेव पल्लवप्रचयेन संछादिता शुककुलदलितदाडिमीफलद्रवार्द्रीकृततलैरतिचपलकपिकम्पितकक्कोलच्युतपल्लवफलशबलैरनवरतनिपतितकुसुमरेणुपांसुलैः पथिकजनरचितलवङ्गपल्लवस्रस्तरैरतिकठोरनालिकेरकेतकीकरीरकेसरपरिगतप्रान्तैस्ताम्बूलीलतावनद्धपूगखण्डमण्डितैर्वनलक्ष्मीवासभवनैरिव विराजिता लतामण्डपैरुन्मदमातङ्गकपोलस्थलगलितमदसलिलसिक्तेनेव निरन्तरमेलालतावनेन मदगन्धिनान्धकारिता नखमुखलग्नेभकुम्भमुक्ताफललुब्धैः शबरसेनापतिभिरभिहन्यमानकेसरिशता प्रेताधिपनगरीव सदासंनिहितमृत्युभीषणा महिषाधिष्ठिता च समरोद्यतपताकिनीव बाणासनारोपितशिलीमुखा विमुक्तसिंहनादा च कात्यायनीव प्रचलितखड्गभीषणा रक्तचन्दनालंकृता च कर्णीसुतकथेव संनिहितविपुलाचला शशोपगता च कल्पान्तप्रदोषसंध्येव प्रनृत्तनीलकण्ठा पल्लवारुणा चामृतमथनवेलेव श्रीद्रुमोपशोभिता वारुणीपरिगता च प्रावृडिव घनश्यामलानेकशतह्रदालंकृता च चन्द्रमूर्तिरिव सततमृक्षसार्थानुगता हरिणाध्यासिता च राज्यस्थितिरिव चमरमृगवालव्यजनोपशोभिता समदगजघटापरिपालिता च गिरितनयेव स्थाणुसंगता मृगपतिसेविता च जानकीव प्रसूतकुशलवा निशाचरपरिगृहीता च कामिनीव चन्दनमृगमदपरिमलवाहिनी रुचिरागुरु-

तिलकभूपिता च सोत्कण्ठेव विविधपल्लवानिलवीजिता समदना च बालग्रीवेव व्याघ्रनखपङ्क्तिमण्डिता गण्डकाभरणा च प्रानभूमिरिव प्रकटितमधुकोशकशता प्रकीर्णविविधकुसुमा च क्वचित्प्रलयवेलेव महावराहदंष्ट्रासमुत्खातधरणिमण्डला क्वचिद्दशमुखनगरीव चटुलवानरवृन्दभज्यमानतुङ्गशालाकुला क्वचिदचिरनिर्वृत्तविवाहभूमिरिव हरितकुशसमित्कुसुमशमीपलाशशोभिता क्वचिदुद्वृत्तमृगपतिनादभीतेव कण्टकिता क्वचिन्मत्तेव कोकिलकुलप्रलापिनी क्वचिदुन्मत्तेव वायुवेगकृततालशब्दा क्वचिद्विधवेवोन्मुक्ततालपत्त्रा क्वचित्समरभूमिरिव शरशतनिचिता क्वचिदमरपतितनुरिव नेत्रसहस्रसंकुला क्वचिन्नारायणमूर्तिरिव तमालनीला क्वचित्पार्थरथपताकेव वानराक्रान्ता क्वचिदवनिपतिद्वारभूमिरिव वेत्रलताशतदुष्प्रवेशा क्वचिद्विराटनगरीव कीचकशतावृता क्वचिदम्बरश्रीरिव व्याधानुगम्यमानतरलतारकमृगा क्वचिद्गृहीतव्रतेव दर्भचीरजटावल्कलधारिण्यपरिमितबहुलपत्त्रसंचयापि सप्तपर्णभूषिता क्रूरसत्त्वापि मुनिजनसेविता पुष्पवत्यपि पवित्रा विन्ध्याटवी नाम।

तस्यां च दण्डकारण्यान्तःपाति सकलभुवनतलख्यातमुत्पत्तिक्षेत्रमिव भगवतो धर्मस्य सुरपतिप्रार्थनापीतसकलसागरसलिलस्य मेरुमत्सराद्गगनतलप्रसारितविकटशिरःसहस्रेण दिवसकररथगमनपथमपनेतुमभ्युद्यतेनावगणितसकलसुरसमूहवचसा विन्ध्यगिरिणाप्यनुल्लङ्घिताज्ञस्य जठरानलजीर्णवातापिदानवस्य सुरासुरमुकुटमकरपत्त्रकोटीचुम्बितचरणरजसो दक्षिणाशामुखविशेषकस्य सुरलोकादेकहुंकारनिपातितनहुषप्रकटप्रभावस्य भगवतो महामुनेरगस्त्यस्य भार्यया लोपामुद्रया स्वयमुपरचितालवालकैः करपुटसलिलसेकसंवर्धितैः सुत-

निर्विशेषैरुपशोभितं पादपैस्तत्पुत्रेण च गृहीतव्रतेनाषाढिना पवित्रभस्मविरचितत्रिपुण्ड्काभरणेन कुशचीवरवाससा मुञ्जमेखलाकलितमध्येन गृहीतहरितपर्णपुटेन प्रत्युटजमटता भिक्षां दृढदस्युनाम्ना पवित्रीकृतमतिप्रभूतेध्माहरणाच्च यस्येध्मवाह इति पिता द्वितीयं नाम चकार दिशि दिशि शुकहरितैश्च कदलीवनैः श्यामलीकृतपरिसरं स- 5 रिता च कलशयोनिपरिपीतसागरमार्गानुगतयेव बद्धवेणिकया गोदावर्या परिगतमाश्रमपदमासीत्।

यत्र च दशरथवचनमनुपालयन्नुत्सृष्टराज्यो दशवदनलक्ष्मीविभ्रमविरामो रामो महामुनिमगस्त्यमनुचरन्सह सीतया लक्ष्मणोपरचितरुचिरपर्णशालः पञ्चवट्यां कंचित्कालं सुखमुवास। चिरशून्ये- 10 ऽद्यापि यत्र शाखानिलीननिभृतपाण्डुकपोतपङ्क्तयो लग्नतापसाग्निहोत्रधूमराजय इव लक्ष्यन्ते तरवः। बलिकर्मकुसुमान्युद्धरन्त्याः सीतायाः करतलादिव संक्रान्तो यत्र रागः स्फुरति लताकिसलयेषु। यत्र च पीतोद्गीर्णं जलनिधिजलमिव मुनिना निखिलमाश्रमापान्तवर्तिषु विभक्तं महाह्रदेषु। यत्र दशरथसुतनिशितशरनिकरनिपात- 15 निहतरजनिचरबलबहुलरुधिरसिक्तमूलमद्यापि तद्रागाविद्धनिर्गतपलाशमिवाभाति नवकिसलयमरण्यम्। अधुनापि यत्र जलधरसमये गम्भीरमभिनवजलधरनिवहनिनादमाकर्ण्य भगवतो रामस्य त्रिभुवनविवरव्यापिनश्चापघोषस्य स्मरन्तो न गृह्णन्ति शष्पकवलमजस्रमश्रुजलप्लुतदीनदृष्टयो वीक्ष्य शून्या दश दिशो जराजर्जरित- 20 विषाणकोटयो जानकीसंवर्धिता जीर्णमृगाः। यस्मिन्ननवरतमृगयानिहतशेषवनहरिणप्रोत्साहित इव कृतसीताविप्रलम्भः कनकमृगो राघवमतिदूरं जहार। यत्र च मैथिलीवियोगदुःखदुःखितौ दशवद-

नविनाशपिशुनौ चन्द्रसूर्याविव कबन्धग्रस्तौ समं रामलक्ष्मणौ त्रिभुवनभयं महच्चक्रतुः। अत्यायतश्च यस्मिन्दशरथसुतशरनिपातितो योजनबाहोर्बाहुरगस्त्यप्रसादनागतनहुषाजगरकायशङ्कामकरोदृषिजनस्य। जनकतनया च भर्त्रा विरहविनोदनार्थमुटजाभ्यन्तरलिखिता यत्र ग्रामनिवासदर्शनोत्सुका पुनरिव धरणितलादुल्लसन्ती वनचरैरद्याप्यालोक्यते।

तस्य चैवंविधस्य संप्रत्यपि प्रकटोपलक्ष्यमाणपूर्ववृत्तान्तस्यागस्त्याश्रमस्य नातिदूरे जलनिधिपानप्रकुपितवरुणोत्साहितेनागस्त्यमत्सरात्तदाश्रमसमीपवर्त्यपर इव वेधसा महाजलनिधिरुत्पादितः प्रलयकालविघटिताष्टदिग्भागसंधिबन्धं गगनतलमिव भुवि निपतितमादिवराहसमुद्धृतधरामण्डलस्थानमिव सलिलपूरितमनवरतमज्जदुन्मदशबरकामिनीकुचकलशलुलितजलमुत्फुल्लकुमुदकुवलयकह्लारमुन्निद्रारविन्दमधुबिन्दुनिस्यन्दबद्धचन्द्रकमलिकुलपटलान्धकारितसौगन्धिकमारसितसमदसारसमम्बुरुहमधुपानमत्तकलहंसकामिनीकृतकोलाहलमनेकजलचरपतंगशतसंचलनचञ्चलितवाचालवीचिमालमनिलोल्लासितकल्लोलशिखरसीकरारब्धदुर्दिनमशङ्कितावतीर्णाभिरम्भःक्रीडारागिणीभिः स्नानसमये वनदेवताभिः केशपाशकुसुमैः सुरभीकृतमेकदेशावतीर्णमुनिजनापूर्यमाणकमण्डलुकलजलध्वनिमनोहरमुन्मिषदुत्पलवनमध्यचारिभिः सवर्णतया रसितानुमेयैः कादम्बकदम्बकैरासेवितमभिषेकावतीर्णपुलिन्दराजसुन्दरीकुचचन्दनधूलिधवलिततरंगमुपान्तजातकेतकीरजःपटलबद्धकूलपुलिनमासन्नाश्रमागततापसक्षालितार्द्रवल्कलकषायपाटलतटजलमुपतटविटपिपल्लवानिलवीजितमविरलतमालवीथिकान्धकारिताभिर्वालिनिर्वासितेन संचरता प्रतिदिन-

ऋष्यमूकवासिना सुग्रीवेणावलुप्तफलपरिलघुलताभिरुद्वासितापसानां देवतार्चनोपयुक्तकुसुमाभिरुत्पतज्जलचरपतंगपक्षपुटविगलितजलबिन्दुसेकसुकुमारकिसलयाभिर्लतामण्डपतलस्थितशिखण्डिमण्डलारब्धताण्डवाभिरनेककुसुमपरिमलवाहिनीभिर्वनदेवताभिः श्वासवासिताभिरिव वनराजिभिरुपरुद्धतीरमपरसागराशङ्किभिः सलिलमादातुमवनतैर्जलधरैरिव बहलपङ्कमलिनैर्वनकरिभिरनवरतमापीयमानसलिलमगाधमनन्तमप्रतिममपां निधानं पम्पाभिधानं पद्मसरः। यत्र च विकचकुवलयप्रभाश्यामायमानपक्षपुटान्यद्यापि मूर्तिमद्रामशापप्रस्तानीव मध्यचारिणालोक्यन्ते चक्रनाम्ना मिथुनानि।

तस्यैवंविधस्य पद्मसरसः पश्चिमे तीरे राघवशरप्रहारजर्जरितजीर्णतालतरुखण्डस्य च समीपे दिग्गजकरदण्डानुकारिणा जरदजगरेण सततमावेष्टितमूलतया बद्धमहालवाल इव तुङ्गस्कन्धावलम्बिभिरनिलवेल्लितैरहिनिर्मोकैर्धृतोत्तरीय इव दिक्चक्रवालपरिमाणमिव गृह्णता भुवनान्तरालविप्रकीर्णेन शाखासंचयेन प्रलयकालताण्डवप्रसारितभुजसहस्रमुडुपतिशकलशेखरमिव विडम्बयितुमुद्यतः पुराणतया पतनभयादिव गगनस्कन्धलग्नो निखिलशरीरव्यापिभिरतिदूरोन्नताभिर्जीर्णतया शिराभिरिव परिगतो व्रततिभिर्जरातिलकबिन्दुभिरिव कण्टकैराचिततनुरितस्ततः परिपीतसागरसलिलैर्गगनागतैः पक्षरथैरिव शाखान्तरेषु निलीयमानैः क्षणमम्बुभारालसैरार्द्रीकृतपल्लवैर्जलधरपटलैरप्यदृष्टशिखरदेशस्तुङ्गतया नन्दनवनश्रियमिवावलोकयितुमभ्युद्यतः समीपवर्तिनामुपरि संचरतां गगनतलगमनखेदायासितानां रविरथतुरङ्गमाणां सृक्कपरिस्रुतैः फेनपटलैः संदेहिततूलराशिभिर्धवलीकृतशिखरशाखो वनगजकपोलकण्डूयनलग्नमद-

निलीनमत्तमधुकरमालेन लोहशृङ्खलाबन्धनिश्चलेनेव कल्पस्थायिना मूलेन समुपेतः कोटराभ्यन्तरनिविष्टैः स्फुरद्भिः सजीव इव मधुकरपटलैर्दुर्योधन इवोपलक्षितशकुनिपक्षपातो नलिननाभ इव वनमालोपगूढो नवजलधरव्यूह इव नभसि दर्शितोन्नतिरखिलभुवनत-
5 लावलोकनप्रासाद इव वनदेवतानामधिपतिरिव दण्डकारण्यस्य नायक इव सर्ववनस्पतीनां सखेव विन्ध्यस्य शाखाबाहुभिरुपगूह्येव विन्ध्याटवीमवस्थितो महाजीर्णः शाल्मलीवृक्षः।

तत्र च शाखाग्रेषु कोटरोदरेषु पल्लवान्तरेषु स्कन्धसंधिषु जीर्णवल्कलविवरेषु महावकाशतया विश्रब्धविरचितकुलायसहस्राणि दु-
10 रारोहतया विगलितविनाशभयानि नानादेशसमागतानि शुकशकुनिकुलानि प्रतिवसन्ति स्म। यैः परिणामविरलदलसंहतिरपि स वनस्पतिरविरलदलनिचयश्यामल इवोपलक्ष्यते दिवानिशं निलीनैः। ते च तस्मिन्वनस्पतावतिवाह्यातिवाह्य रजनीमात्मनीडेषु प्रतिदिनमुत्थायोत्थायाहारान्वेषणाय नभसि विरचितपङ्क्तयो मदकलहलधरहलमु-
15 खोत्क्षेपविकीर्णबहुस्रोतसमम्बरतले कलिन्दकन्यामिव दर्शयन्तः सुरगजोन्मूलितविगलदाकाशगङ्गाकमलिनीशङ्कामुपजनयन्तो दिवसकररथतुरगप्रभानुलिप्तमिव गगनतलमुपपादयन्तः संचारिणीमिव मरकतस्थलीं विडम्बयन्तः शैवलपल्लवावलिमिवाम्बरसरसि प्रसारयन्तो गगनविततैः पक्षपुटैः कदलीदलैरिव दिनकरखरकरनिकरप-
20 रिखेदिताशामुखानि वीजयन्तो वियति विसारिणीं शष्पवीथीमिवारचयन्तः सेन्द्रायुधमिवान्तरिक्षमादधाना विचरन्ति स्म शुकशकुनयः। कृताहाराश्च पुनः प्रतिनिवृत्यात्मकुलायावस्थितेभ्यः शावकेभ्यो विविधान्फलरसान्कलममञ्जरीविकारांश्च प्रहतहरिणरुधिरानुर-

•कशार्दूलनखकोटिपाटलेन चञ्चुपुटेन दत्त्वा दत्त्वाधरीकृतर नासाधारणेन गुरुणापत्यप्रेम्णा तस्मिन्नेव क्रोडान्तर्निहिततनयाः क्षपाः क्षपयन्ति स्म।

एकस्मिंश्च जीर्णकोटरे जायया सह निवसतः पश्चिमे वयसि वर्तमानस्य कथमपि पितुरहमेवैको विधिवशात्सूनुरभवम्। अति- 5 प्रबलया चाभिभूता ममैव जायमानस्य प्रसववेदनया जननी मे लोकान्तरमगमत्। अभिमतजायाविनाशशोकदुःखितोपि खलु तातः सुतस्नेहादन्तर्निगृह्य पटुप्रसरमपि शोकमेकाकी मत्संवर्धनपर एवाभवत्। अतिपरिणतवयाश्च कुशचीरानुकारिणीमल्पावशिष्टजीर्णपिच्छजालजर्जरामवस्रस्तांसदेशशिथिलामपगतोत्पतनसंस्कारां पक्षसंततिमुद्व- 10 हन्नुपारूढकम्पतया च संतापकारिणीमङ्गलग्नां जरामिव विधुन्वन्नकठोरशेफालिकाकुसुमनालपिञ्जरेण कलममञ्जरीदलनमसृणितक्षीणोपान्तलेखेन स्फुटिताग्रकोटिना चञ्चुपुटेन परनीडनिपतिताभ्यः शालिवल्लरीभ्यस्तण्डुलकणानादायादाय तरुमूलनिपतितानि शुककुलावदलितानि फलशकलानि समाहृत्य परिभ्रमितुमशक्तो मह्यम- 15 दात्। प्रतिदिवसमात्मना च मदुपभुक्तशेषमकरोदशनम्।

एकदा तु प्रभातसंध्यारागलोहिते गगनतलकमलिनीमधुरक्तपक्षसंपुटे वृद्धहंस इव मन्दाकिनीपुलिनादपरजलनिधितटमवतरति चन्द्रमसि परिणतरङ्कुरोमपाण्डुनि व्रजति विशालतामाशाचक्रवाले गजरुधिररक्तहरिसटालोमलोहिनीभिरातप्तलाक्षिकतन्तुपाटलाभिराया- 20 मिनीभिरशिशिरकिरणदीधितिभिः पद्मरागरत्नशलाकासंमार्जनीभिरिव समुत्सार्यमाणे गगनकुट्टिमकुसुमप्रकरे तारागणे संध्यामुपासितुमुत्तराशावलम्बिनि मानससरस्तीरमिवावतरति सप्तर्षिमण्डले त-

टगतविघटितशुक्तिसंपुटविप्रकीर्णमरुणकरप्रेरणाधोगलितमुडुगणामिव मुक्ताफलनिकरमुद्वहति धवलितपुलिनतटमुदन्वति पूर्वेतरे तुषारबिन्दुवर्षिणि विबुद्धशिखिकुले विजृम्भमाणकेसरिणि करिणीकदम्बकप्रबोध्यमानसमदकरिणि क्षपाजलजडकेसरं कुसुमनिकरमुदयगि-
5 रिशिखरस्थितं सवितारमिवोद्दिश्य पल्लवाञ्जलिभिः समुत्सृजति कानने रासभरोमधूसरासु वनदेवताप्रासादानां तरूणां शिखरेषु पारावतमालायमानासु धर्मपताकास्विव समुन्मिषन्तीषु तपोवनाग्निहोत्रधूमलेखास्ववश्यायसीकरिणि लुलितकमलवने रतिखिन्नशबरसीमन्तिनीस्वेदजलकणिकापहारिणि वनमहिषरोमन्थफेनबिन्दुवाहिनि च-
10 लितपल्लवलतालास्योपदेशव्यसनिनि विघटमानकमलखण्डमधुसीकरासारवर्षिणि कुसुमामोदतर्पितालिजाले निशावसानजातजडिम्नि मन्दमन्दसंचारिणि प्रवाति प्राभातिके मातरिश्वनि कमलवनप्रबोधमङ्गलपाठकानामिभगण्डडिण्डिमानां मधुलिहां कुमुदोदरेषु घनघटमानदलपुटनिबद्धपक्षसंहतीनामुच्चरत्सु हुंकारेषु प्रभातशिशिरमारु-
15 ताहतमुत्तप्तजतुरसाश्लिष्टपक्ष्ममालमिव सशेषनिद्राजिह्मतारं चक्षुरुन्मीलयत्सु शनैः शनैरूषरशय्याधूसरक्रोडरोमराजिषु वनमृगेष्वितस्ततः संचरत्सु वनचरेषु विजृम्भमाणे श्रोत्रहारिणि पम्पासरःकलहंसकोलाहले समुल्लसति नर्तितशिखण्डिमण्डले मनोहरे वनगजकर्णतालशब्दे क्रमेण च गगनतलमार्गमवतरतो दिवसकरवारण-
20 स्यावचूलचामरकलाप इवोपलक्ष्यमाणे मञ्जिष्ठारागलोहिते किरणजाले शनैः शनैरुदिते भगवति सवितरि पम्पासरःपर्यन्ततरुशिखरसंचारिण्यध्यासितगिरिशिखरे दिवसकरजन्मनि हृततारे पुनरिव कपीश्वरे वनमभिपतति बालातपे स्पष्टे जाते प्रत्यूषसि नचिरादिव दिव-

साष्टमभागभाजि स्पष्टभासि भास्वति भूते प्रयातेषु यथाभिमतानि दिगन्तराणि शुककुलेषु कुलायनिलीननिभृतशावकसनाथेऽपि निःशब्दतया शून्य इव तस्मिन्वनस्पतौ स्वनीडावस्थित एव ताते मयि च शैशवादसंजातबलसमुद्भिद्यमानपक्षपुटे तातस्य समीपवर्तिनि कोटरगते सहसैव तस्मिन्महावने संत्रासितसकलवनचरः सरभसमुत्पतत्पतत्रिपक्षपुटशब्दसंततो भीतकरिपोतचीत्कारपीवरः प्रचलितलताकुलितमत्तालिकुलक्वणितमांसलः परिभ्रमदुद्धोणवनवराहरवघर्घरो गिरिगुहासुप्तप्रबुद्धसिंहनादोपबृंहितः कम्पयन्निव तरून्भगीरथावतार्यमाणगङ्गाप्रवाहकलकलबहलो भीतवनदेवताकर्णितो मृगयाकोलाहलध्वनिरुदचरत् । आकर्ण्य च तमहमश्रुतपूर्वमुपजातवेपथुरर्भकतया जर्जरितकर्णविवरो भयविह्वलः समीपवर्तिनः पितुः प्रतीकारबुद्ध्या जराशिथिलपक्षपुटान्तरमविशम् ।

अनन्तरं च सरभसमितो गजयूथपतिलुलितकमलिनीपरिमल इतः क्रोडकुलदश्यमानभद्रमुस्तारसामोद इतः करिकलभभज्यमानसल्लकीकषायगन्ध इतो निपतितशुष्कपत्त्रमर्मरध्वनिरितो वनमहिषविषाणकोटिकुलिशभिद्यमानवल्मीकधूलिरितो मृगकदम्बकमितो वनगजकुलमितो वनवराहयूथमितो वनमहिषवृन्दमितः शिखण्डिमण्डलविरुतमितः कपिञ्जलकुलकलकूजितमितः कुररकुलक्वणितमितो मृगपतिनखभिद्यमानकुम्भकुञ्जररसितमियमार्द्रपङ्कमलिना वराहपद्धतिरियमभिनवशष्पकवलरसश्यामला हरिणरोमन्थफेनसंहतिरियमुन्मदगन्धगजगण्डकण्डूयनपरिमलालीनमुखरमधुकरविरुतिरेषा निपतितरुधिरबिन्दुसिक्तशुष्कपत्त्रपाटला रुरुपदव्येतद्द्विरदचरणमृदितविटपपल्लवपटलमेतत्खड्गिकुलक्रीडितमेष नखकोटिविलिखितविकट-

पत्त्रलेखो रुधिरपाटलः करिमौक्तिकदलदन्तुरो मृगपतिमार्ग एषा प्रत्यग्रप्रसूतवनमृगीगर्भरुधिरलोहिनी भूमिरियमटवीवेणिकानुकारिणी पक्षचरस्य यूथपतेर्मदजलमलिना संचारवीथी चमरीपङ्क्तिरियमनुगम्यतामुच्छुष्कमृगकरीषपांसुला त्वरिततरमध्यास्यतामियं वनस्थली 5 तरुशिखरमारुह्यतामालोक्यतां दिगियमाकर्ण्यतामयं शब्दो गृह्यतां धनुरवहितैः स्थीयतां विमुच्यन्तां श्वान इत्यन्योन्यमभिवदतो मृगयासक्तस्य महतो जनसमूहस्य तरुगहनान्तरितविग्रहस्य क्षोभितकाननं कोलाहलमशृणवम्।

अथ नातिचिरादिवानुलेपनार्द्रमृदङ्गध्वनिधीरेण गिरिविवरविजृ- 10 म्भितप्रतिनादगम्भीरेण शबरशरताडितानां केसरिणां निनादेन संत्रस्तयूथमुक्तानामेकाकिनां च संचरतामनवरतकरास्फोटमिश्रेण जलधररसितानुकारिणा गजयूथपतीनां कण्ठगर्जितेन सरभससारमेयविलुप्यमानावयवानामालोलकातरतरलतारकाणामेणकानां च करुणकूजितेन निहतयूथपतीनां वियोगिनीनामनुगतकलभानां च स्थित्वा 15 स्थित्वा समाकर्ण्य कलकलमुत्कर्णपल्लवानामितस्ततः परिभ्रमन्तीनां प्रत्यग्रपतिविनाशशोकदीर्घेण करिणीनां चीत्कृतेन कतिपयदिवसप्रसूतानां च खड्गिधेनुकानां त्रासपरिभ्रष्टपोतान्वेषिणीनामुन्मुक्तकण्ठमतिकरुणमारसन्तीनामाक्रन्दितेन तरुशिखरसमुत्पतितानामाकुलाकुलचारिणां च पत्त्ररथानां कोलाहलेन रूपानुसारप्रधावितानां च 20 मृगयूनां युगपदतिरभसपादपाताभिहताया भुवः कम्पमिव जनयता चरणशब्देन कर्णान्ताकृष्टज्यानां च मदकलकुररकामिनीकण्ठकूजितकलेन शरनिकरवर्षिणां धनुषां निनादेन पवनाहतिक्वणितधाराणामसीनां च कठिनमहिषस्कन्धपीठपातिनां रणितेन शुनां च सरभ-

सविमुक्तघर्घरध्वनीनां वनान्तरव्यापिना ध्वानेन सर्वतः प्रचलितमि-
व तदरण्यमभवत्। अचिराच्च प्रशान्ते तस्मिन्मृगयाकलकले निर्वृ-
ष्टमूकजलधरवृन्दानुकारिणि मथनावसानोपशान्तवारिणि सागर इव
स्तिमिततामुपागते कानने मन्दीभूतभयोऽहमुपजातकुतूहलः पितुरुत्स-
ङ्गादीषदिव निष्क्रम्य कोटरस्थ एव शिरोधरां प्रसार्य संत्रासतरल- 5
तारकः शैशवात्किमिदमितिं समुपजातदिदृक्षस्तामेव दिशं चक्षुः
प्राहिणवम्।

अभिमुखमापतच्च तस्माद्वनान्तरादर्जुनभुजदण्डसहस्रविप्रकीर्णमिव
नर्मदाप्रवाहमनिलवशाच्चलितमिव तमालकाननमेकीभूतमिव कालरा-
त्रीणां यामसंघातमञ्जनशिलास्तम्भसंभारमिव क्षितिकम्पविघूर्णितम- 10
न्धकारपुञ्जमिव रविकिरणाकुलितमन्तकपरिवारमिव परिभ्रमन्तम-
वदारितरसातलोद्भूतमिव दानवलोकमशुभकर्मसमूहमिवैकत्र समाग-
तमशेषदण्डकारण्यवासिमुनिजनशापसार्थमिव संचरन्तमनवरतशर-
निकरवर्षिरामनिहतखरदूषणबलनिवहमिव तदपध्यानात्पिशाचतामुप-
गतं कलिकालबन्धुवर्गमिवैकत्र संगतमवगाहप्रस्थितमिव वनमहिषयू- 15
थमचलशिखरस्थितकेसरिकराकृष्टिपतनविशीर्णमिव कालमेघपटलम-
खिलरूपविनाशाय धूमकेतुजालमिव समुद्गतमन्धकारितकाननमनेक-
सहस्रसंख्यमतिभयजननमुत्पातवेतालव्रातमिव शबरसैन्यमद्राक्षम्।

मध्ये च तस्यातिमहतः शबरसैन्यस्य प्रथमे वयसि वर्तमानम-
तिकर्कशत्वादायसमिव निर्मितमेकलव्यमिव जन्मान्तरागतमुद्भि- 20
द्यमानश्मश्रुराजितया प्रथममदलेखामण्ड्यमानगण्डभित्तिमिव गज-
यूथपतिकुमारकमसितकुवलयश्यामेन देहप्रभाप्रवाहेण कालिन्दीज-

लेनेव पूरितारण्यमाकुटिलाग्रेण स्कन्धावलम्बिना कुन्तलभारेण केस-
रिणमिव गजमदमलिनीकृतेन केसरकलापेनोपेतमायतललाटमतितुङ्ग-
घोरघोणमेककर्णाभरणतामुपनीतस्य भुजंगफणमणेरापाटलैरंशुभिरा-
लोहितीकृतेन पर्णशयनाभ्यासाल्लग्नपल्लवरागेणेव वामपार्श्वेन विरा-
5 जमानमचिरप्रहतगजकपोलगृहीतेन सप्तच्छदपरिमलवाहिना कृष्णागु-
रुपङ्केणेव सुरभिणा मदेन कृताङ्गरागमुपरि तत्परिमलान्धेन भ्रम-
ता मायूरातपत्रानुकारिणा मधुकरकुलेन तमालपल्लवेनेव निवारि-
तातपमालोलकर्णपल्लवव्याजेन भुजबलनिर्जितया भयप्रयुक्तसेवया वि-
न्ध्याटव्येव करतलेनापमृज्यमानगण्डस्थलस्वेदलेखमापाटलया हरि-
10 णकुलक्षयरात्रिसंध्यायमानया शोणितार्द्रयेव दृष्ट्या रञ्जयन्तमाशावि-
भागानाजानुलम्बेन कुञ्जरकरप्रमाणमिव गृहीत्वा निर्मितेन चण्डिका-
रुधिरबलिप्रदानार्थमसकृन्निशितशस्त्रोल्लेखविषमितशिखरेण भुजयु-
गलेनोपशोभितमन्तरान्तरालग्नाश्यानहरिणरुधिरबिन्दुना स्वेदजलक-
णिकाचितेन गुञ्जाफलविमिश्रैः करिकुम्भमुक्ताफलैरिव रचिताभ-
15 रणेन विन्ध्यशिलातलविशालेन वक्षःस्थलेनोद्भासमानमविरतश्रमा-
भ्यासादुल्लिखितोदरमिभमदमलिनमालानस्तम्भयुगलमुपहसन्तमिवोरु-
दण्डद्वयेन लाक्षालोहितकौशेयपरिधानमकारणेपि क्रूरतया बद्ध-
त्रिपताकोग्रभ्रुकुटिकराले ललाटफलके प्रबलभक्त्याराधितया मत्परि-
ग्रहोयमिति कात्यायन्या त्रिशूलेनेवाङ्कितमुपजातपरिचयैरनुगच्छद्भिः
20 श्रमवशाद्दूरविनिर्गताभिः स्वभावपाटलतया शुष्काभिरपि हरिणशो-
णितमिव क्षरन्तीभिर्जिह्वाभिरावेद्यमानखेदैर्विवृतमुखतया स्पष्टदृष्ट-
दन्तांशून्दंष्ट्रान्तराललग्नकेसरिसटानिव सृक्कभागानुद्वहद्भिः स्थूलवरा-
टकमालिकापरिगतकण्ठैर्महावराहदंष्ट्राप्रहारजर्जरैरल्पकायैरपि महा-

शक्तित्वादनुपजातकेसरैरिव केसरिकिशोरकैर्मृगवधूवैधव्यदीक्षादान-
दक्षैरनेकवर्णैः श्वभिरतिप्रमाणाभिश्च केसरिणामभयप्रदानयाचनार्थमा-
गताभिः सिंहीभिरिव कौलेयककुटुम्बिनीभिरनुगम्यमानं कैश्चिद्गृ-
हीतचमरबालगजदन्तभारैः कैश्चिदच्छिद्रपर्णबद्धमधुपुटैः कैश्चिन्मृगप-
तिभिरिव गजकुम्भमुक्ताफलनिकरसनाथपाणिभिः कैश्चिद्यातुधानैरि- 5
व गृहीतपिशितभारैः कैश्चित्प्रमथैरिव केसरिकृत्तिधारिभिः कैश्चि-
त्क्षपणकैरिव मयूरपिच्छवाहिभिः कैश्चिच्छिशुभिरिव काकपक्षधरैः
कैश्चित्कृष्णचरितमिव दर्शयद्भिः समुत्खातविधृतगजदन्तैः कैश्चि-
ज्जलदागमदिवसैरिव जलधरच्छायामलिनाम्बरैरनेकवृत्तान्तैः श-
बरवृन्दैः परिवृतमरण्यमिव सखड्गधेनुकमभिनवजलधरमिव मयू- 10
रपिच्छचित्रचापधारिणं बकराक्षसमिव गृहीतैकचक्रमरुणानुजमिवो-
द्धृतानेकमहानागदशनं भीष्ममिव शिखण्डिशत्रुं निदाघदिवसमिव
सतताविर्भूतमृगतृष्णं विद्याधरमिव मानसवेगं पराशरमिव यो-
जनगन्धानुसारिणं घटोत्कचमिव भीमरूपधारिणमचलराजकन्य-
काकेशपाशमिव नीलकण्ठचन्द्रकाभरणं हिरण्याक्षदानवमिव म- 15
हावराहदंष्ट्राविभिन्नवक्षःस्थलमतिरागिणमिव कृतबहुबन्दीपरिग्रहं पि-
शिताशनमिव रक्तलुब्धकं गीतकलाविन्यासमिव निषादानुगतम-
म्बिकात्रिशूलमिव महिषरुधिरार्द्रकायमभिनवयौवनमपि क्षपितबहु-
वयसं कृतसारमेयसंग्रहमपि फलमूलाशनं कृष्णमप्यसुदर्शनं स्व-
च्छन्दप्रचारमपि दुर्गैकशरणं क्षितिभृत्पादानुवर्तिनमपि राजसेवा- 20
नभिज्ञमपत्यमिव विन्ध्यस्यांशावतारमिव कृतान्तस्य सहोदरमिव
पापस्य सारमिव कलिकालस्य भीषणमपि महासत्त्वतया गम्भीर-
मिवोपलक्ष्यमाणमनभिभवनीयाकृतिं मातङ्गकनामानं शबरसेनाप-

तिमपश्यम्। अभिधानं तु पश्चात्तस्याहमश्रौषम्।

आसीच्च मे मनसि । अहो मोहप्रायमेतेषां जीवितं साधुजनवि
र्हितं च चरितम् । तथा हि । पुरुषपिशितोपहारे धर्मबुद्धिः
आहारः साधुजननिन्दितो मधुमांसादिः । श्रमो मृगया । शास्
5 शिवारुतम्। समुपदेष्टारः सदसतां कौशिकाः । प्रज्ञा शकुनिज्ञानम्
परिचिताः श्वानः। राज्यं शून्यास्वटवीषु । आपानकमुत्सवः । मि
त्राणि क्रूरकर्मसाधनानि धनूंषि । सहाया विषदिग्धमुखा भुजंग
इव सायकाः। गीतमुत्सादकारि मुग्धमृगाणाम् । कलत्राणि बन्दी
गृहीताः परयोषितः । क्रूरात्मभिः शार्दूलैः सह संवासः । पशुर
10 धिरेण देवतार्चनम्। मांसेन बलिकर्म। चौर्येण जीवनम् । भूषणानि
भुजंगमणयः । वनगजमदैरङ्गरागः । यस्मिन्नेव कानने निवसन्ति
तदेवोत्खातमूलमशेषतः कुर्वते । इति चिन्तयत्येव मयि स शबर
सेनापतिरटवीभ्रमणसमुद्भवं श्रममपनिनीषुरागत्य तस्यैव शाल्मली
तरोरधश्छायायामवतारितकोदण्डस्त्वरितपरिजनोपनीतपल्लवासने स
15 मुपाविशत् । अन्यतमस्तु शबरयुवा ससंभ्रममवतीर्य तस्मात्करत
लपरिक्षोभिताम्भसः सरसो वैदूर्यद्रवानुकारि प्रलयदिवसकरकिर
णोपतापादम्बरैकदेशमिव विलीनमिन्दुमण्डलादिव प्रस्यन्दितं द्रुत
मिव मुक्ताफलनिकरमत्यच्छतया स्पर्शानुमेयं हिमजडमरविन्दक
शरजःकषायमम्भः कमलिनीपत्त्रपुटेन प्रत्यग्रोद्धृताश्च धौतपङ्कनि
20 र्मलमृणालिकाः समुपाहरत् । आपीतसलिलश्च सेनापतिस्ता मृणालि
काः शशिकला इव सैंहिकेयः क्रमेणादशत् । अपगतश्रमश्चोत्थाय
परिपीताम्भसा सकलेन तेन शबरसैन्येनानुगम्यमानः शनैःशनैरभि
मतं दिगन्तरमयासीत्।

एकतमस्तु जरच्छबरस्तस्मात्पुलिन्दवृन्दादनासादितहरिणपिशितः पिशिताशन इवातिविकृतदर्शनः पिशितार्थी तस्मिन्नेव तरुतले मुहूर्तमिव व्यलम्बत । अन्तरिते च शबरसेनापतौ स जीर्णशबरः पिबन्निवास्माकमायूंषि रुधिरबिन्दुपाटलया कपिलभ्रूलतापरिवेषभीषणया दृष्ट्या गणयन्निव शुककुलकुलायस्थानानि श्येन इव विहगामिषास्वादलालसः सुचिरमारुरुक्षुस्तं वनस्पतिमा मूलादपश्यत्, उत्क्रान्तमिव तस्मिन्क्षणे तदालोकनभीतानां शुककुलानामसुभिः । किमिव हि दुष्करमकरुणानाम् । यतः स तमनेकतालतुङ्गमभ्रंकषशाखाशिखरमपि सोपानैरिवायत्नेनैव पादपमारुह्यताननुपजातोत्पतनशक्तीन्कांश्चिदल्पदिवसजातान्गर्भच्छविपाटलाञ्छाल्मलीकुसुमशङ्कामुपजनयतः कांश्चिदुद्भिद्यमानपक्षतया नलिनसंवर्तिकानुकारिणः कांश्चिदर्कफलसदृशान्कांश्चिल्लोहितायमानचञ्चूकोटीनीषद्विघटितदलपुटपाटलमुखानां कमलमुकुलानां श्रियमुद्वहतः कांश्चिदनवरतशिरःकम्पव्याजेन निवारयत इव प्रतीकारासमर्थानेकैकतया फलानीव तस्य वनस्पतेः शाखान्तरेभ्यः कोटरेभ्यश्च शुकशावकानग्रहीत् । अपगतासूंश्च कृत्वा क्षितावपातयत् ।

तातस्तु तं महान्तमकाण्ड एव प्राणहरमप्रतीकारमुपप्लवमुपनतमालोक्य द्विगुणतरोपजातवेपथुर्मरणभयादुद्भ्रान्ततरलतारकां विषादशून्यामश्रुजलप्लुतां दृशमितस्ततो दिक्षु विक्षिपन्नुच्छुष्कतालुरात्मप्रतीकाराक्षमस्त्रासस्रस्तसंधिशिथिलेन पक्षसंपुटेनाच्छाद्य मां तत्कालोचितप्रतीकारं मन्यमानः स्नेहपरवशो मद्रक्षणाकुलः किंकर्तव्यताविमूढः क्रोडविभागेन मामवष्टभ्य तस्थौ । असावपि पापः क्रमेण शाखान्तरैः संचरमाणः कोटरद्वारमागत्य जीर्णासितभुजंगभोगभी-

षणं प्रसार्य विविधवनवराहवसाविस्रगन्धि करतलं कोदण्डगुणाक-
र्षणव्रणाङ्कितप्रकोष्ठमन्तकदण्डानुकारिणं वामबाहुमतिनृशंसो मुहु-
र्मुहुर्दत्तचञ्चुप्रहारमुत्कूजन्तमाकृष्य तातमपगतासुमकरोत्। मां तु
स्वल्पत्वाद्भयसंपिण्डिताङ्गत्वात्सावशेषत्वादायुषः कथमपि पक्षसंपु-
5 टान्तरगतं नालक्षयत्। उपरतं च तमवनितले शिथिलशिरोधरम-
धोमुखममुञ्चत्। अहमपि तच्चरणान्तराले प्रवेशितशिरोधरो निभृ-
तमङ्कनिलीनस्तेनैव सहापतम्। अवशिष्टपुण्यतया तु पवनवशसंपु-
ञ्जितस्य महतः शुष्कपत्त्रराशेरुपरि पतितमात्मानमपश्यम्। अङ्गानि
येन मे नाशीर्यन्त यावच्चासौ तस्मात्तरुशिखरान्नावतरति तावद-
10 हमवशीर्णपर्णसवर्णत्वादस्फुटोपलक्ष्यमाणमूर्तिः पितरमुपरतमुत्सृज्य
नृशंस इव प्राणपरित्यागयोग्येपि काले बालतया कालान्तरभुवः
स्नेहरसस्यानभिज्ञो जन्मसहभुवा भयेनैव केवलमभिभूयमानः किं-
चिदुपजाताभ्यां पक्षाभ्यामीषत्कृतावष्टम्भो लुठन्नितस्ततः कृतान्त-
मुखकुहरादिव विनिर्गतमात्मानं मन्यमानो नातिदूरवर्तिनः शब-
15 रसुन्दरीकर्णपूररचनोपयुक्तपल्लवस्य संकर्षणपटनीलच्छाययोपहसत
इव गदाधरदेहच्छविमच्छैः कालिन्दीजलच्छेदैरिव विरचितच्छदस्य
वनकरिमदसलिलैरिवोपसिक्तकिसलयस्य विन्ध्याटवीकेशपाशश्रिय-
मुद्वहतो दिवाप्यन्धकारितशाखान्तरस्याप्रविष्टसूर्यकिरणमतिगहनमप-
रस्येव पितुरुत्सङ्गमतिमहतस्तमालविटपिनो मूलदेशमविशम्।

20 अवतीर्य स तेन समयेन क्षितितलविप्रकीर्णान्संहृत्य ताञ्छुक-
शिशूनेकलतापाशसंयतानाबध्य पर्णपुटेतित्वरितगमनः सेनापतिग-
तेनैव वर्त्मना तामेव दिशमगच्छत्। मां तु लब्धजीविताशं प्रत्य-
ग्रपितृमरणशोकशुष्कहृदयमतिदूरपातादायासितशरीरं संत्रासजाता

सर्वाङ्गोपतापिनी बलवती पिपासा परवशमकरोत् । अनया च कालकलया सुदूरमतिक्रान्तः स पापकृदिति परिकलय्य किंचिदुन्नमितकंधरो भयचकितया दृशा दिशोऽवलोक्य तृणेऽपि चलति पुनः प्रतिनिवृत्त इति तमेव पदे पदे पापकारिणमुत्प्रेक्षमाणो निष्क्रम्य तस्मात्तमालतरुमूलात्सलिलसमीपमुपसर्तुं प्रयत्नमकरवम् । 5

अजातपक्षतया च नातिस्थिरचरणसंचारस्य मुहुर्मुहुर्मुखेन पततो मुहुस्तिर्यङ्निपतन्तमात्मानमेकया पक्षपाल्या संधारयतः क्षितितलसंसर्पणश्रमातुरस्यानभ्यासवशादेकमपि दत्त्वा पदमनवरतमुन्मुखस्य स्थूलस्थूलं श्वसतो धूलिधूसरस्य संसर्पतो मम समभून्मनसि । अतिकष्टास्वप्यवस्थासु जीवितनिरपेक्षा न भवन्ति खलु जगति सर्वप्राणिनां 10 प्रवृत्तयः । नास्ति जीवितादन्यदभिमततरमिह जगति सर्वजन्तूनाम् । एवमुपरतेपि सुगृहीतनाम्नि ताते यदहमविकलेन्द्रियः पुनरेव प्राणिमि । धिङ्मामकरुणमतिनिष्ठुरमकृतज्ञम् । अहो सोढपितृमरणशोकदारुणं येन मया जीव्यते । उपकृतमपि नापेक्ष्यते । खलं हि खलु मे हृदयम् । मया हि लोकान्तरगतायामम्बायां नियम्य शोकवेगमा 15 प्रसवदिवसात्परिणतवयसापि सता तैस्तैरुपायैर्मत्संवर्धनक्लेशमतिमहान्तमपि स्नेहवशादगणयता यत्तातेन परिपालितस्तत्सर्वमेकपदे विस्मृतम् । अतिकृपणाः खल्वमी प्राणाः । यदुपकारिणमपि तातमद्यापि क्वापि गच्छन्तं नानुगच्छन्ति । सर्वथा न कंचिन्न खलीकरोति जीविततृष्णा । यदीदृगवस्थमपि मामयमायासयति जलाभिलाषः । मन्ये 20 चागणितपितृमरणशोकस्य निर्घृणतैव केवलमियं मम सलिलपानबुद्धिः । अद्यापि दूर एव सरस्तीरम् । तथा हि । जलदेवतानूपुररवानुकारि दूरेऽद्यापि कलहंसविरुतमेतत् । अस्फुटानि श्रूयन्ते सारसरासि-

तानि । अयं च विप्रकर्षादाशामुखविसर्पणविरलः संचरति नलिनीख-
ण्डपरिमलः । दिवसस्य चेयमतिकष्टा दशा वर्तते । तथा हि । रविर-
म्बरतलमध्यवर्ती स्फुरन्तमातपमनवरतमनलधूलिनिकरमिव विकि-
रति करैः । अधिकामुपजनयति तृषामातपस्पर्शसंतप्तपांसुपटलदुर्गमा
5 भूमिः । अतिप्रबलपिपासावसन्नानि गन्तुमल्पमपि मे नालमङ्गकानि ।
अप्रभुरस्म्यात्मनः । सीदति मे हृदयम् । अन्धकारतामुपयाति चक्षुः ।
अपि नाम खलो विधिरनिच्छतोपि मे मरणमद्योपपादयेत् ।

इत्येवं चिन्तयत्येव मयि तस्मात्सरसो नातिदूरवर्तिनि तपोवने जा-
बालिर्नाम महातपा मुनिः प्रतिवसति स्म । तत्तनयश्च हारीतनामा
10 तापसकुमारकः सनत्कुमार इव सर्वविद्यावदातचेताः सवयोभि-
रपरैस्तपोधनकुमारकैरनुगम्यमानस्तेनैव पथा द्वितीय इव भगवान्वि-
भावसुरतितेजस्वितया दुर्निरीक्ष्यमूर्तिरुद्यतो दिवसकरमण्डलादिवो-
त्कीर्णस्तडिद्भिरिव रचितावयवस्तप्तकनकद्रवेणेव बहिरुपलिप्तमूर्तिरा-
पिशङ्गावदातया देहप्रभया स्फुरन्त्या सबालातपमिव दिवसं सदा-
15 वानलमिव वनमुपदर्शयन्नुत्तप्तलोहलोहिनीनामनेकतीर्थाभिषेकपूताना-
मंसस्थलावलम्बिनीनां जटानां निकरेणोपेतः स्तम्भितशिखाकलापः
खाण्डववनदिधक्षया कृतकपटबटुवेष इव भगवान्पावकस्तपोवनदेव-
तानूपुरानुकारिणा धर्मशासनकटकेनेव स्फाटिकेनाक्षवलयेन दक्षिण-
श्रवणावलम्बिना विराजमानः सकलविषयोपभोगनिवृत्त्यर्थमुपपा-
20 दितेन ललाटपट्टके त्रिसत्येनेव भस्मत्रिपुण्ड्रकेणालंकृतो गगनगमनो-
न्मुखबलाकानुकारिणा स्वर्गमार्गमिव दर्शयता सततमुद्ग्रीवेण स्फाटि-
कमणिकमण्डलुनाध्यासितवामकरतलः स्कन्धदेशावलम्बिना कृष्णा-
जिनेन नीलपाण्डुभासा तपस्तृष्णानिपीतेनान्तर्निष्पतता धूमपटलेनेव

परीतमूर्तिरभिनतबिससूत्रनिर्मितेनेव परिलघुतया पर्वनलोलेन निर्मांसविरलपार्श्वकपञ्जरमिव गणयता वामांसावलम्बिना यज्ञोपवीतेनोद्भासमानो देवतार्चनार्थमागृहीतवनलताकुसुमपरिपूर्णपर्णपुटसनाथशिखरेणाषाढदण्डेन व्याप्रतसव्येतरपाणिर्विषाणशिखरोत्खातामुद्वहता स्नानमृदमुपजातपरिचयेन नीवारमुष्टिसंवर्धितेन कुशकुसुमल- 5 तायास्यमानलोलदृष्टिना तपोवनमृगेणानुयातो विटप इव कोमलवल्कलावृतशरीरो गिरिरिव समेखलो राहुरिवासकृदास्वादितसोमः पद्मनिकर इव दिवसकरमरीचिपो नदीतटतरुरिव सततजलक्षालननिर्मलजटः करिकलभ इव विकचकुमुददलशकलसितदशनो द्रौणिरिव कृपानुगतो नक्षत्रराशिरिव चित्रमृगकृत्तिकाश्लेषोपशोभितो घ- 10 र्मकालदिवस इव क्षपितबहुदोषो जलधरसमय इव प्रशमितरजःप्रसरो वरुण इव कृतोदवासो हरिरिवापनीतनरकभयः प्रदोषारम्भ इव संध्यापिङ्गलतारकः प्रभातकाल इव बालातपकपिलो रविरथ इव दृढनियमिताक्षचक्रः सुराजेव निगूढमन्त्रसाधनक्षपितविग्रहो जलनिधिरिव करालशङ्खमण्डलावर्तगर्तो भगीरथ इवासकृद्दृष्टगङ्गा- 15 वतारो मधुकर इवासकृदनुभूतपुष्करवनवासो वनचरोपि कृतमहालयप्रवेशोसंयतोपि मोक्षार्थी सामप्रयोगपरोपि सततावलम्बितदण्डः सुप्तोपि प्रबुद्धः संनिहितनेत्रद्वयोपि परित्यक्तवामलोचनस्तदेव कमलसरः सिस्नासुरुपागमत्।

प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि च सदा खलु भवन्ति सतां 20 चेतांसि। यतः स मां तदवस्थमालोक्य समुपजातदयः समीपवर्तिनमृषिकुमारकमन्यतममब्रवीत्। अयं कथमपि शुकशिशुरसंजातपक्षपुट एव तरुशिखरादस्मात्परिच्युतः। श्येनमुखपरिभ्रष्टेन वानेन

भवितव्यम्। तथा हि। अतिदवीयस्तया प्रपातस्याल्पशेषजीवितोय-
मामीलितलोचनो मुहुर्मुहुर्मुखेन पतति मुहुर्मुहुरत्युल्बणं श्वसिति मुहु-
र्मुहुश्चञ्चुपुटं विवृणोति। न शक्नोति शिरोधरां धारयितुम्। तदेहि या-
वदेवायमसुभिर्न वियुज्यते तावदेव गृहाणैममवतारय सलिलसमी-
5 पम्'। इत्यभिधाय तेन मां सरस्तीरमनाययत्। उपसृत्य च जलसमी-
पमेकदेशनिहितदण्डकमण्डलुरादाय स्वयं मां मुक्तप्रयत्नमुत्तानितमु-
खमङ्गुल्या कतिचित्सलिलविन्दूनपाययत्। अम्भःक्षोदकृतसेकं च स-
मुपजातनवीनप्राणमुपतटप्ररूढस्य नलिनीपलाशस्य जलशिशिरायां छा-
यायां निधाय समुचितमकरोत्स्नानविधिम्। अभिषेकावसाने चानेकप्रा-
10 णायामपूतो जपन्पवित्राण्यघमर्षणानि प्रत्यग्रभग्नैरुन्मुखो रक्तारविन्दै-
र्नलिनीपत्रपुटेन भगवते सवित्रे दत्त्वार्घमुदतिष्ठत्। आगृहीतधौतधवल-
वल्कलश्च सहज्योत्स्न इव संध्यातपः करतलनिर्धूननविशदजटः कमण्ड-
लुमापूर्य शुचिना सरोवारिणा प्रत्यग्रस्नानार्द्रजटेन सकलेन तेन मुनिकु-
मारककदम्बकेनानुगम्यमानो मां गृहीत्वा तपोवनाभिमुखं शनैरगच्छत्।

15 अनतिदूरमिव गत्वा दिशि दिशि सदासंनिहितकुसुमफलै-
स्तालतिलकतमालहिन्तालबकुलबहुलैरेलालताकुलितनालिकेरीकलापैर्लो-
ललोध्रलवलीलवङ्गपल्लवैरुल्लसितचूतरेणुपटलैरलिकुलझंकारमुखरसहका-
रैरुन्मदकोकिलकुलकलापकोलाहलिभिरुत्फुल्लकेतकीरजःपुञ्जपिञ्जरैः पू-
गीलतादोलाधिरूढवनदेवतैस्तारकावर्षमिवाधर्मविनाशपिशुनं कुसुम-
20 निकरमनिलचलितमनवरतमतिधवलमुत्सृजद्भिः संसक्तपादपैः का-
ननैरुपगूढमचकितप्रचलितकृष्णसारशतशबलाभिरुत्फुल्लकमलिनीलोहि-
नीभिर्मारीचमायामृगावलूनरूढवीरुद्दलाभिर्दाशरथिचापकोटिक्षतकन्द-
गर्तविषमिततलाभिर्दण्डकारण्यस्थलीभिरुपशोभितप्रान्तमागृहीतसमि-

त्कुशकुसुममृद्भिरध्ययनमुखरशिष्यानुगतैः सर्वतः प्रविशद्भिर्मुनि-
भिरशून्योपकण्ठमुत्कण्ठितशिखण्डिमण्डलश्रूयमाणजलकलशपूरणध्वान-
मनवरताज्याहुतिप्रीतैश्चित्रभानुभिः सशरीरमेव मुनिजनममर-
लोकं निनीषुभिरुद्धूयमानधूमलेखाछलेनाबध्यमानस्वर्गमार्गगमनसोपान-
सेतुमिवोपलक्ष्यमाणमासन्नवर्तिनीभिस्तपोधनसंपर्कादिवापगतकालुष्या- 5
भिस्तरंगपरंपरासंक्रान्तरविबिम्बपङ्क्तिभिस्तापसदर्शनागतसप्तर्षिमालावि-
गाह्यमानाभिरिवातिविकचकुमुदवनमृषिजनमुपासितुमवतीर्ण ग्रहग-
णमिव निशासूद्वहन्तीभिर्दीर्घिकाभिः परिवृतमनिलावनमितशिख-
राभिः प्रणम्यमानमिव वनलताभिरनवरतमुक्तकुसुमैरभ्यर्च्यमानमिव
पादपैराबद्धपल्लवाञ्जलिभिरुपास्यमानमिव विटपैरुटजाजिरप्रकीर्णशु- 10
ष्यच्छ्यामाकमुपसंगृहीतामलकलवलीकर्कन्धूकदलीलकुचपनसचूततल-
फलमध्ययनमुखरबटुजनमनवरतश्रवणगृहीतवषट्कारवाचालशुककुलम-
नेकसारिकोद्घुष्यमाणसुब्रह्मण्यमरण्यकुक्कुटोपभुज्यमानवैश्वदेवबलिपिण्ड-
मासन्नवापीकलहंसपोतभुज्यमाननीवारबलिमेणीजिह्वापल्लवोपलिह्यमान-
मुनिबालकमग्निकार्यार्धदग्धसिमिसिमायमानसमित्कुशकुसुममुपलभग्न- 15
नालिकेररसास्निग्धशिलातलमचिरक्षुण्णवल्कलरसपाटलभूतलं रक्त-
चन्दनोपलिप्तादित्यमण्डलकनिहितकरवीरकुसुममितस्ततो विक्षिप्तभ-
स्मलेखाकृतमुनिजनभोजनभूमिपरिहारं परिचितशाखामृगकराकृष्टि-
निष्कास्यमानप्रवेश्यमानजरदन्धतापसमिभकलभकार्धोपभुक्तपतितैः स-
रस्वतीभुजलताविगलितैः शङ्खवलयैरिव मृणालशकलैः कल्माषि- 20
तमृषिजनार्थमेणकैर्विषाणशिखरोत्खन्यमानविविधकन्दमूलमम्बुपूर्णपुष्क-
रपुटैर्वनकरिभिरापूर्यमाणविटपालवालकमृषिकुमारकाकृष्यमाणवनवरा-
हदंष्ट्रान्तरालग्नशालूकमुपजातपरिचयैः कलापिभिः पक्षपुटपव-

नसंधुक्ष्यमाणमुनिहोमहुताशनमारब्धामृतचरुचारुगन्धमर्धपक्वपुरोडाश-
पुण्यपरिमलामोदितमविच्छिन्नाज्यधाराहुतिहुतभुग्झंकारमुखरितमुपचर्य-
माणातिथिवर्गं पूज्यमानपितृदैवतमर्च्यमानहरिहरपितामहमुद्दिश्य-
मानश्राद्धकल्पं व्याख्यायमानयज्ञविद्यमालोच्यमानधर्मशास्त्रं वाच्य-
5 मानविविधपुस्तकं विचार्यमाणसकलशास्त्रार्थमारभ्यमाणपर्णशालमु-
पलिप्यमानाजिरमुपमृज्यमानोटजाभ्यन्तरमाबध्यमानध्यानं साध्य-
मानमन्त्रमभ्यस्यमानयोगमुपह्रियमाणवनदेवताबलिं निर्वर्त्यमानमौ-
ञ्जमेखलं क्षाल्यमानवल्कलमुपसंगृह्यमाणसमिधमुपसंस्क्रियमाणकृ-
ष्णाजिनं गृह्यमाणगवेधुकं शोष्यमाणपुष्करबीजं ग्रथ्यमानाक्षमालं
10 न्यस्यमानवेत्रदण्डं संस्क्रियमाणपरिव्राजकमापूर्यमाणकमण्डलुमदृष्टपूर्वं
कलिकालस्यापरिचितमनृतस्याश्रुतपूर्वमनङ्गस्याब्जयोनिमिव त्रिभुव-
नवन्दितमसुरारिमिव प्रकटितवराहनरसिंहरूपं साङ्ख्यमिव कपि-
लाधिष्ठितं मधुरोपवनमिव बलावलीढदर्पितधेनुकमुदयनमिवान-
न्दितवत्सकुलं किंपुरुषाधिराज्यमिव मुनिजनगृहीतजलकलशा-
15 भिषिच्यमानद्रुमं निदाघसमयावसानमिव प्रत्यासन्नजलप्रपातं जल-
धरसमयमिव वनगहनमध्यसुखसुप्तहरिं हनुमन्तमिव शिलाश-
कलप्रहारसंचूर्णिताक्षास्थिसंचयं खाण्डवविनाशोद्यतार्जुनमिव प्रार-
ब्धाग्निकार्यं सुरभिविलेपनधरमपि सततािवर्भूतहव्यधूमगन्धं मात-
ङ्गकुलाध्यासितमपि पवित्रमुल्लसितधूमकेतुशतमपि प्रशान्तोपद्रवं
20 परिपूर्णद्विजपतिमण्डलसनाथमपि सदासंनिहिततरुगहनान्धकारम-
तिरमणीयमपरमिव ब्रह्मलोकमाश्रममपश्यम् ।

यत्र च मलिनता हविर्धूमेषु न चरितेषु मुखरागः शुकेषु न कोपेषु
तीक्ष्णता कुशाग्रेषु न स्वभावेषु चञ्चलता कदलीदलेषु न मनःसु

लेखायाश्च कथनीयः प्रणामपूर्वमशिथिलः कण्ठग्रहः। गाढमालिङ्गनीया च तमालिका। अस्मद्वचनादशेषः प्रष्टव्यः कुशलं कादम्बरीपरिजनः। रचिताञ्जलिना च भगवानामन्त्रणीयो हेमकूट इति।

एवमादिश्य तं सुहृदादिसाधनमक्लेशयता शनैः शनैर्गन्तव्यमित्युक्त्वा वैशम्पायनं स्कन्धावारभरे न्ययुङ्क्त। स्वयमपि च तथारूढ 5 एव गमनहेलाहर्षहेषारवकम्पितकैलासेन खुरताण्डवखण्डितभुवा कान्तकुन्तलतावनवाहिना तरुणतुरगप्रायेणाश्वसैन्येनानुगम्यमानस्त-मेव लेखहारकं पर्याणलग्नमभिनवकादम्बरीवियोगशून्येनापि हृदये-नोज्जयिनीमार्गं पृच्छन्प्रतस्थे। क्रमेण चातिप्रवृद्धप्रकाण्डपादपप्रायया मालिनीलतामण्डपैर्मण्डलिततरुखण्डया गजपतिपातितपादपपरिहारव- 10 क्रीकृतमार्गया जनजनिततृणपर्णकाष्ठकोटिकूटप्रकटितवीरपुरुषघात-स्थानया महापादपमूलोत्कीर्णकान्तारदुर्गया तृषितपथिकखण्डितदलो-ज्झितामलकीफलनिकरया विकसितकरञ्जमञ्जरीरजोविच्छुरितत-टैस्तटतरुबद्धपटच्चरकर्पटध्वजचिह्नैरिष्टकास्थितशुष्कपल्लवविष्टरानुमितप-थिकविश्रामैर्विश्रान्तकार्पटिकप्रस्फोटितचरणधूलिधूसरकिसलयलाञ्छि- 15 तोपकण्ठैः पत्त्रसंकरासुरभीकृताशिशिरपङ्किलविवर्णास्वादुजलैर्व्रतति-ग्रन्थिग्रथितपर्णपुटतृणपूलीचिह्नानुमेयैर्जरत्कान्तारकूपैरसुलभसलिलतया-नभिलषितोद्देशया मधुबिन्दुस्यन्दिसिन्धुवारवनराजिरजोधूसरिततीरा-भिश्च कुब्जकलताजालकैर्जटिलीकृतसैकताभिरध्वगोत्खातवालुका-कूपकोपलभ्यमानकलुषस्वल्पसलिलाभिः शुष्कगिरिनदिकाभिर्विष- 20 मीकृतान्तरालया कुक्कुटकुलकौलेयकरटितानुमीयमानगुल्मगहनग्रा-मकटिकया शून्यया दिवसमटव्या गत्वा परिणते रविबिम्बे बिम्बारुणातपविसरे वासरे निःशाखीकृतकदम्बशाल्मलीपलाशव-

हुलैः शिखरशेषैकपल्लवविडम्बितातपत्त्रैः पादपैरूर्ध्वस्थितप्ररोहस्थूल-
स्थाणुमूलग्रन्थिजटिलैश्च हरितालकपिलपक्ववेणुविटपिदलरचितवृत्ति-
भिर्मृगभयकृततृणपुरुषकैर्विपाकपाण्डुभिः फलिनैः प्रियङ्गुप्रायैरटवीक्षे-
त्रैर्विरलीकृतवनप्रदेशे चिरप्ररूढस्य रक्तचन्दनतरोरुपरि बद्धं सरसपि-
5 शितपिण्डनिभैरलक्तकैरभिनवशोणितारुणेन रक्तचन्दनरसेन चार्द्र
जिह्वालतालोहिनीभी रक्तपताकाभिः केशकलापकान्तिना च कृष्ण-
चामरावचूलेन प्रत्यग्रविशसितानां जीवानामिवावयवैरुपराचितदण्ड-
मण्डनं परिणतवराटकघटितबुद्बुदार्धचन्द्रखण्डखचितं सुतमहिपरक्ष-
णावतीर्णदिनकरावतारितशशिनेव विराजितशिखरं दोलायितशृङ्गस-
10 ङ्गिलोहशृङ्खलावलम्बमानघर्घरखघोरघण्टया च घटितकेसरिसटारु-
चिरचामरया काञ्चनत्रिशूलिकया लिखितनभःस्थलमितस्ततः पथिक-
पुरुषोपहारमार्गमिवालोकयन्तं महान्तं रक्तध्वजं दूरत एव ददर्श।

तदभिमुखश्च किंचिदध्वानं गत्वा केतकीसूचिखण्डपाण्डुरेण वन-
द्विरददन्तकपाटेन परिवृतां लोहतोरणेन च रक्तचामरालिपरिकरां
15 कालायसदर्पणमण्डलमालां शबरमुखमालामिव कपिलकेशभीषणां
बिभ्राणेन सनाथीकृतद्वारदेशामभिमुखप्रतिष्ठितेन च विनिहितरक्त-
चन्दनहस्तकतया रुधिरारुणयमकरतलास्फालितेनेव शोणितलवलोभ-
लोलशिवालिह्यमानलोहितलोचनेन लोहमहिषेणाध्यासिताञ्जनशिला-
वेदिकां क्वचिद्रक्तोत्पलैः शबरनिपातितानां वनमहिषाणामिव लोचनैः
20 क्वचिदगस्तिकुड्मलैः केसरिणामिव करजैः क्वचित्किंशुककुसुमकु-
ड्मलैः शार्दूलानामिव सरुधिरैर्नखरैः कृतपुण्यपुष्पप्रकरामन्यत्राङ्कु-
रितामिव कुटिलहरिणविषाणकोटिकूटैः पल्लवितामिव सरसजि-
ह्वाछेदशतैः कुसुमितामिव रक्तनयनसहस्रैः फलितामिव मुण्ड-

मण्डलैरुपहारहिंसां दर्शयन्तीं शाखान्तरालनिरन्तरनिलीनरक्तकुक्कुटकुलैः भयादकालदर्शितकुसुमस्तबकैरिव रक्ताशोकविटपैर्विभूषिताङ्गणां बलिरुधिरपानतृष्णया समागतैश्च वेतालैरिव तालैर्दीयमानफलमुण्डोपहारां, शङ्काज्वरकम्पितैरिव कदलिकावनैर्भयोत्कण्टकितैरिव श्रीफलतरुखण्डैस्त्रासोर्ध्वकेशैरिव खर्जूरवनैः समन्ताद्गहनीकृतां 5 विदलितवनकरिकुम्भविगलितरक्तमुक्ताफलानि नवरुधिरारुणबलिसिक्थलुब्धमुग्धकृकवाकुग्रस्तमुक्तानि विकिरद्भिरम्बिकापरिग्रहदुर्ललितैः क्रीडद्भिः केसरिकिशोरकैरशून्योद्देशां, प्रभूतरुधिरदर्शनोद्भूतमूर्छापतितेनेव प्रतिबिम्बितेनास्तताम्रेण सवित्रा ताम्रतरीकृतैः क्षतजजलप्रवाहैः पिच्छिलीकृताजिरामवलम्बमानदीपधूमरक्तांशुकेन प्रथितशिखिगलवलयावलिना पिष्टपिण्डपाण्डुरितघनघण्टामालभारिणा त्रापुषसिंहमुखमध्यस्थितस्थूललोहकण्टकं दत्तदन्तदण्डार्गलं गलत्पीतनीललोहितदर्पणस्फुरितबुद्बुदमालं कपाटपट्टद्वयं दधानेन गर्भगृहद्वारदेशेन दीप्यमानामन्तःपिण्डिकापीठपातिभिश्च सर्वपशुजीवितैरिव शरणमुपागतैरलक्तकपटैरविरहितचरणमूलां पतितकृष्णचामरप्रतिबिम्बानां च शिरश्छेदलग्नकेशजालकानामिव परशुपट्टिशप्रभृतीनां जीवविशसनशस्त्राणां प्रभाभिर्बद्धबहलान्धकारतया पातालनिवासिनीमिवोपलक्ष्यमाणां, रक्तचन्दनखचितस्फुरत्फलपल्लवकलितैश्च बिल्वपत्त्रदामभिर्बालकमुण्डप्रालम्बैरिव कृतमण्डनां शोणितताम्रकदम्बस्तबककृतार्चनैश्च पशूपहारपटहपटुरटितरसोल्लसितरोमाञ्चैरिवाङ्गैः क्रूरतामुद्वहन्तीं चारुचामीकरपट्टप्रावृतेन च ललाटेन शबरसुन्दरीरचितसिन्दूरतिलकबिन्दुना दाडिमकुसुमकर्णपूरप्रभासेकलोहितायमानकपोलभित्तिना रुधिरताम्बूलारुणिताधरपुटेन भृकुटिकुटिलभ्रुणा

रक्तनयनेन मुखेन कुसुम्भपाटलितदुकूलकलितया च देहलतया म-
हाकालाभिसारिकावेषविभ्रमं बिभ्रतीं संपिण्डितनीलगुग्गुलुधूपधूमा-
रुणीकृताभिश्च प्रचलन्तीभिर्गर्भगृहदीपिकालताभिरङ्गुलीभिरिव महिषा-
सुरशोणितलवालोहिनीभिः स्कन्धपीठकण्डूयनचलितत्रिशूलदण्डकृ-
5 तापराधं वनमहिषमिव तर्जयन्तीं, प्रलम्बकूर्चधरैश्छागैरपि धृतव्रतै-
रिव स्फुरदधरपुटैराखुभिरपि जपपरैरिव कृष्णाजिनप्रावृताङ्गैः कुरङ्गै-
रपि प्रतिशयितैरिव ज्वलितलोहितमूर्धरत्नरश्मिभिः कृष्णसर्पैरपि शि-
रोधृतमणिदीपकैरिवाराध्यमानां, सर्वतः कठोरवायसगणेन च रटता
स्तुतिपरेणेव स्तूयमानां स्थूलस्थूलैः शिराजालकैर्गोधागोलिकाकृक-
10 लासकुलैरिव दग्धस्थाण्वाशङ्कया समारूढैर्गवाक्षितेनालक्ष्मीसमुत्खा-
तलक्षणस्थानैरिव विस्फोटव्रणविन्दुभिः कल्माषितसकलशरीरेण
कर्णावतंससंस्थापितया च चूडया रुद्राक्षमालिकामिव दधानेनाम्बि-
कापादपतनश्यामललाटवर्धमानार्बुदेन कुवादिदत्तासिद्धाञ्जनस्फु-
टितैकलोचनतया त्रिकालमितरलोचनाञ्जनदानादरश्लक्ष्णीकृतदारुश-
15 लाकेन प्रत्यहं कटुकालाबुस्वेदप्रारब्धदन्तुरताप्रतीकारेण कथंचिद-
स्थानदत्तेष्टकाप्रहारतया शुष्कैकभुजोपशान्तमर्दनव्यसनेनोपर्युपर्यवि-
श्रान्तकटुकवर्तिप्रयोगवर्धिततिमिरेणाश्मभेदसंगृहीतवराहदंष्ट्रेणेङ्गुदीको-
शकृतौषधाञ्जनसंग्रहेण सूचीस्यूतशिरासंकोचितवामकराङ्गुलिना
कौशेयककोशावरणक्षतिव्रणितचरणाङ्गुष्ठकेनासम्यक्कृतरसायनानीताका-
20 लज्वरेण जरां गतेनापि दक्षिणापथाधिराज्यवरप्रार्थनाकदर्थित-
दुर्गेण दुःशिक्षितश्रमणादिष्टतिलकाबद्धविभवप्रत्याशेन हरितपत्रर-
साङ्गारमषीमलिनशम्बूकवाहिना पट्टिकालिखितदुर्गास्तोत्रेण धूमर-
क्तालक्तकाक्षरतालपत्रकुहकतन्त्रमन्त्रपुस्तिकासंग्राहिणा जीर्णमहापा-

गुप्तोपदेशलिखितमहाकालमतेनाविर्भूतनिधिवादव्याधिना संजातधातुवादवायुना लग्नासुरविवरप्रवेशपिशाचेन प्रवृत्तयक्षकन्यकाकामित्वमनोरथव्यामोहेन वर्धितान्तर्धानमन्त्रसाधनसंग्रहेण श्रीपर्वताश्चर्यवार्तासहस्राभिज्ञेनासकृदभिमन्त्रितसिद्धार्थकप्रहृतिप्रधावितैः पिशाचगृहीतकैः करतलताडनचिपिटीकृतश्रवणपुटेनाविमुक्तशैवाभिमानेन 5 दुर्गृहीतालाबुवीणावादनोद्वेजितपथिकपरिहृतेन दिवसमेव मशककणितानुकारि किमपि कम्पितोत्तमाङ्गं गायता स्वदेशभाषानिबद्धभागीरथीभक्तिस्तोत्रनर्तकेन गृहीततुरगब्रह्मचर्यतयान्यदेशागतोषितासु जरत्प्रव्राजितासु बहुकृत्वः संप्रयुक्तस्त्रीवशीकरणचूर्णेनातिगोपणतया कदाचिद्दुर्न्यस्ताष्टपुष्पिकापातोत्पादितक्रोधेन, चण्डिकामपि 10 मुखभङ्गिविकारैर्भृशमुपहसता, कदाचिन्निवार्यमाणावासरुषिताध्वगारब्धबहुबाहुयुद्धपातभग्नपृष्ठकेन कदाचित्कृतापराधबालकपलायनामर्षपश्चात्प्रधावितस्खलिताधोमुखनिपातोपलस्फुटितशिरःकपालभुग्नग्रीवेण कदाचिज्जनपदकृतनवागतापरधार्मिकादरमत्सरोद्बुद्धात्मना निःसंस्कारतया यत्किंचनकारिणा खञ्जतया मन्दं मन्दं संचारिणा बधिर- 15 तया संज्ञाव्यवहारिणा रात्र्यन्धतया दिवाविहारिणा लम्बोदरतया प्रभूताहारिणानेकशः फलपातनकुपितवानरनखोल्लेखच्छिद्रितनासापुटेन बहुशः कुसुमावचयचलितभ्रमरसहस्रदंशशीर्णीकृतशरीरेण सहस्रशः शयनीकृतासंस्कृतशून्यदेवकुलकालसर्पदष्टेन शतशः श्रीफलतरुशिखरच्युतिचूर्णितोत्तमाङ्गेनासकृदुत्सन्नदेवमातृगृहवास्यृक्षनखजर्जरितकपो- 20 लेन सर्वदा वसन्तक्रीडिना जनेनोत्क्षिप्तखण्डखट्वारोपितवृद्धदासीविवाहप्राप्तविडम्बनेनानेकायतनप्रतिशयितनिष्फलोत्थानेन दौस्थित्यमपि विविधव्याधिपरिवृतं स्वकुटुम्बमिवोद्वहता मूर्खतामपि

बहुव्यसनानुगतां प्रसूतानेकापत्यामिव दर्शयता क्रोधमप्यनेकदण्डा-
घातनिर्मितबहुगात्रगण्डकं फलितमिव प्रकाशयता क्लेशमपि सर्वाव-
यवज्वलितदीपिकादाहव्रणविभावितं बहुमुखमिव प्रकटयता परि-
भवमपि निष्कारणाक्रुष्टजनपददत्तपदाकृष्टिशतं सप्रवाहमिव दधानेन
5 शुष्कवनलतानिर्मितबृहत्कुसुमकरण्डकेन वेणुलतारचितपुष्पपातनाङ्कुशि-
केन क्षणमप्यमुक्तकालकम्बलखण्डखोलेन जरद्द्रविडधार्मिकेणाधिष्ठितां
चण्डिकामपश्यत् । तस्यामेव च वासमरचयत् ।

अथावतीर्य तुरगात्प्रविश्य भक्तिप्रवणेन चेतसा तां प्रणनाम ।
कृतप्रदक्षिणश्च पुनः प्रणम्य प्रशान्तोद्देशदर्शनकुतूहलेन परिभ्रमन्नुच्चै-
10 रारटन्तमाक्रोशन्तं च कुपितं द्रविडधार्मिकमेकदेशे ददर्श । दृष्ट्वा च
कादम्बरीविरहोत्कण्ठोद्वेगदूयमानोपि सुचिरं जहास । न्यवारयच्च तेन
सार्धं संरब्धकलहानुपहसतः स्वसैनिकान् । उपसान्त्वनैश्च कथमपि
प्रियालापशतानुनयैः प्रशममुपनीय क्रमेण जन्मभूमिं जातिं विद्यां च
कलत्रमपत्यानि विभवं वयःप्रमाणं प्रव्रज्यायाश्च कारणं स्वयमेव प-
15 प्रच्छ । पृष्टश्चासाववर्णयदात्मानम् । अतीतस्वशौर्यरूपविभववर्णनवा-
चालेन तेन सुतरामरज्यत राजपुत्रः । विरहातुरहृदयस्य विनोदनता-
मिवागात् । उपजातपरिचयश्चास्मै ताम्बूलमदापयत् । अस्तमुपगते
च भगवति सप्तसप्तावावासितेषु यथासंपन्नपादपतलेषु राजसूनुषु
शाखावसक्तपनीयपर्याणेषु क्षितितललुठनपांशुलसटावधूननानुमितो-
20 त्साहेषु गृहीतकतिपयशष्पकवलेषु पीतोदकेषु स्नानार्द्रपृष्ठतया विग-
तश्रमेषु पुरोनिखातकुन्तयष्टिषु संयतेषु वाजिषु वाजिसमीपविरचि-
तपर्णप्रस्तरे च दिवसगमनखिन्नपरिकल्पितयामिके सुषुप्सति सैनि-
कजने कृतबहुपावकप्रभापीततमसि दिवस इव विराजमाने सेनानिवेशे

चन्द्रापीडः परिजनेनैकदेशे संयतस्येन्द्रायुधस्य पुरः परिकल्पितं प्रतीहारनिवेदितं शयनीयमगात्। निषण्णस्य चास्य तत्क्षणमेव पस्पर्श दुःखासिका हृदयम्। अरतिगृहीतश्च विसर्जयांबभूव राजलोकम्। अतिवल्लभानपि नाललाप पार्श्वस्थान्। निमीलितलोचनो मुहुर्मुहुर्मनसा जगाम किंपुरुषविषयम्। अनन्यचेताः सस्मार हेमकूटस्य। निष्कारणबान्धवतामचिन्तयन्महाश्वेताप्रसादानाम्। जीवितफलमभिललाष पुनः पुनः कादम्बरीदर्शनम्। अपगताभिमानपेशलाय नितरामस्पृहयन्मदलेखापरिचयाय। तमालिकां द्रष्टुमाचकाङ्क्ष। केयूरकागमनमुत्प्रैक्षत। हिमगृहकमपश्यत्। उष्णमायतं पुनरुक्तं निशश्वास। बबन्ध चाधिकां प्रीतिं शेषहारे। पश्चात्स्थितां पुण्यभागिनीममन्यत पत्रलेखाम्। एवं चानुपजातनिद्र एव तामनयन्निशाम्। उपसि चोत्थाय तस्य जरद्द्रविडधार्मिकस्येच्छया निसृष्टैर्धनविसरैः पूरयित्वा मनोरथमभिमतमभिरमणीयेषु प्रदेशेषु निवसन्नल्पैरेवाहोभिरुज्जयिनीमाजगाम।

आकस्मिकागमनप्रहृष्टसंभ्रान्तानां पौराणामर्घकमलानीव नमस्काराञ्जलिसहस्राणि प्रतीच्छन्नतर्कित एवाविवेश नगरीम्। अहमहमिकया च प्रधाविताद्‌तिरभसहर्षरसविह्वलात्परिजनाद्धारि देव चन्द्रापीडो वर्तत इत्युपलभ्यास्य पिता निर्भरानन्दमन्दगमनो मन्दर इव क्षीरोदजलमुत्तरीयांशुकममलमागलितमाकर्षन्प्रहर्षनेत्रजलबिन्दुवर्षी मुक्ताफलासार इव कल्पपादपः प्रत्यासन्नवर्तिभिर्जरापाण्डुमौलिभिश्चन्दनविलेपनैरनुपहतक्षौमधारिभिः केयूरिभिरुष्णीषिभिः किरीटिभिः शेखरिभिर्बहुकैलासामिव बहुक्षीरोदामिव क्षितिं दर्शयद्भिः प्रतिपन्नासित्रच्छत्रकेतुचामरैरनुगम्यमानो राजसहस्रैश्चरणाभ्यामेव प्रत्युज्ज-

गाम । दृष्ट्वा च पितरं दूरादेवावतीर्य वाजिनश्चूडामणिमरीचिमालिना मौलिना महीमगच्छत् । अथ प्रसारितभुजेनैह्येहीत्याहूय पित्रा सुचिरं गाढमुपगूढः तत्कालसंनिहितानां च माननीयानां कृतनमस्कारः करे गृहीत्वा विलासवतीभवनमनीयत राज्ञा । तयापि तथैव सर्वा-
5 न्तःपुरपरिवारया प्रत्युद्गम्याभिनन्दितागमनः कृतागमनमङ्गलाचारो दिग्विजयसंबद्धाभिरेव कथाभिः कंचित्कालं स्थित्वा शुकनासं द्रष्टु-माययौ । तत्राप्यमुनैव क्रमेण सुचिरं स्थित्वा निवेद्य वैशम्पायनं स्क-न्धावारवर्तिनं कुशलिनमालोक्य च मनोरमामागत्य विलासवतीभवन एव सर्वाः स्नानादिकाः परवश इव क्रिया निरवर्तयत् । अपराह्णे
10 निजमेव भवनमयासीत् । तत्र च रणरणकखिद्यमानमानसः काद-म्बर्या विना न केवलमात्मानं स्वभवनमवन्तीनगरं वा सकलमेव मही-मण्डलं शून्यममन्यत । ततो गन्धर्वराजपुत्रीवार्ताश्रवणोत्सुकश्च महो-त्सवमिवेप्सितवरप्राप्तिकालमिवामृतोत्पत्तिसमयमिव पत्रलेखागमनं प्रत्यपालयत् ।

15 ततः कतिपयदिवसापगमे मेघनादः पत्रलेखामादायागच्छत् । उ-पानयच्चैनाम् । कृतनमस्कारां च दूरादेव स्मितेन प्रकाशितप्रीतिश्चन्द्रा-पीडः प्रकृतिवल्लभामपि कादम्बरीसकाशात्प्रसादलब्धापरसौभाग्यामिव वल्लभतरतामुपागतामुत्थायातिशयदर्शितादरमालिलिङ्ग पत्रलेखाम् । मेघनादं च प्रणतं पृष्ठे करकिसलयेन पस्पर्श । समुपविष्टश्चाब्रवीत् ।
20 पत्रलेखे कथय तत्रभवत्या महाश्वेतायाः समदलेखाया देव्याः काद-म्बर्याश्च कुशलम् । कुशली वा सकलस्तमालिकाकेयूरकादिः परिजन इति । साब्रवीत् । देव यथाज्ञापयसि भद्रम् । त्वामर्चयति शेखरीकृता-ञ्जलिना ससखीजना सपरिजना देवी कादम्बरी । इत्येवमुक्तवतीं

पत्त्रलेखामादाय मन्दिराभ्यन्तरं विसर्जितराजलोको विवेश । तत्र चोत्ताम्यता मनसा धारयितुमपारयन्कुतूहलमतिप्रीत्या दूरमुत्सारितपरिजनः प्रविश्यागारमचिरप्ररूढायाः स्थलकमलिन्याः पृथुभिरुन्नालैः पलाशैरुपरचितातपत्त्रकृत्याया अध्यास्य मध्यभागमन्यतरस्य मरकतपताकायमानस्य पत्त्रमण्डपस्य तले चरणारविन्देन समुत्सार्य 5 सुखप्रसुप्तं हंसमिथुनमुपविश्याप्राक्षीत् । पत्त्रलेखे कथय कथमसि स्थिता । कियन्ति वा दिनानि । कीदृशो वा देवीप्रसादः । का वा गोष्ठ्यः समभवन् । कीदृश्यो वा कथाः समजायन्त । को वातिशयेनास्मान्स्मरति कस्य वा गरीयसी प्रीतिः । इत्येवं पृष्टा च व्यजिज्ञपत् । देव दत्तावधानेन श्रूयतां यथा स्थितास्मि यावन्ति वा 10 दिनानि यादृशो वा देवीप्रसादो यथा वा गोष्ठ्यः समभवन्यादृश्यश्च कथाः समजायन्त ।

ततः खल्वागते देवे केयूरकेण सह प्रतिनिवृत्याहं तथैव कुसुमशयनीयसमीपे समुपाविशम् । अतिष्ठं च सुखं नवनवाननुभवन्ती देवीप्रसादान् । किं बहुना । प्रायेण मम चक्षुषि चक्षुर्वपुषि वपुः 15 करे करपल्लवो नामाक्षरेषु वाणी प्रीतौ हृदयं देव्याः सकलमेव तं दिवसमभवत् । अपराह्णे च मामेवावलम्ब्य निष्क्रम्य हिमगृहकात्संचरन्ती यदृच्छया निषिद्धपरिजना वल्लभबालोद्यानं जगाम । तत्र सुधाधवलां कालिन्दीजलतरंगमय्येव मरकतसोपानमालया प्रमदवनवेदिकामध्यारोहत् । तस्यां च मणिस्थूणावष्टम्भा स्थिता । स्थित्वा 20 च मुहूर्तमिव हृदयेन सह दीर्घकालमवधार्य किमपि व्याहर्तुमिच्छन्ती निश्चलधृततारकेण निष्पन्दपक्ष्मणा चक्षुषा मुखं मे सुचिरं व्यलोकयत् । विलोकयन्त्येव च कृतसंकल्पा मदनाग्निं प्रवेष्टुमिच्छन्ती

सज्जाविव स्वेदाम्भःस्रोतसि । स्वेदाम्भःस्रोतसेव तरलीकृता समक-म्पत । कम्पिताङ्गी च पतनभियेवागृह्यत विषादेन ।

अथ मया विदिताभिप्रायया तन्मुखविनिवेशितनिष्कम्पनयनदत्ता-वधानयाज्ञापयेति विज्ञापिते निजावयवैरपि वेपथुमद्भिर्निवार्यमा-
5 णेव रहस्यश्रवणलज्जयात्मप्रतिमामपि लिखितमणिकुट्टिमेन चरणा-ङ्गुष्ठेनापक्रमायेवामृशन्ती भवनकलहंसान्कुट्टिमोल्लेखमुखरितनूपुरेण चरणारविन्देन विसर्जयन्ती कर्णोत्पलमधुकरानपि स्विद्यद्वदनव्य-जनीकृतेनांशुकपल्लवेनोत्सारयन्ती ताम्बूलवीटिकाशकलमुत्कोचमिव दन्तखण्डितं शिखण्डिने ददती वनदेवताश्रवणशङ्कितेव मुहुर्मुहुरि-
10 तस्ततो विलोकयन्ती वक्तुकामापि न शक्नोति स्म किंचिदपि लज्जा-कलितगद्गदा गदितुम् । प्रयत्नतोपि चास्या निःशेषं ज्वलता मदनानले-नेव दग्धाजस्रं प्रवहता नयनोदकेनेवोढा प्रविशद्भिर्दुःखैरिवाक्रान्ता पतद्भिः कुसुमचापशरैरिव शकलीकृता निष्पतद्भिर्निश्वसितैरिव निर्वासिता हृदयवर्तिभिश्चिन्ताशतैरिव विधृता निश्वासपायिभिर्मधुकर-
15 कुलैरिव निपीता न प्रावर्तत वाणी । केवलं दुःखसहस्रगणनाय मुक्ताक्षमालिकामिव कल्पयन्ती गलद्भिरस्पृष्टकपोलस्थलैः शुचिभि-रधोमुखी नयनजलबिन्दुभिर्दुर्दिनमदर्शयत् । तदा च तस्याः सका-शादशिक्षतेव लज्जापि लज्जालीलां विनयोपि विनयातिशयं मुग्ध-तापि मुग्धतां वैदग्ध्यमपि वैदग्ध्यं भयमपि भीरुतां विभ्रमोपि विभ्र-
20 मितां विषादोपि विषादितां विलासोपि विलासम् । तथाभूता च देवि किमिदमिति विज्ञापिता मया प्रमृज्य लोहितायमानोदरे लोचने दुःखप्रकर्षेणात्मनः समुद्बन्धनायेव मृणालकोमलया बाहुलतया वे-दिकाकुसुमपालिकाग्रथितकुसुममालामवलम्ब्य समुन्नतैकभ्रूलता मृ-

त्युमार्गमिवालोकयन्ती दीर्घमुष्णं च निःश्वसितवती। तद्दुःखकार-
णमुत्प्रेक्षमाणया च कथनाय पुनःपुनरनुबध्यमाना मया व्रीडया
नखमुखलिखितकेतकीदला लिखिलेव वक्तव्यमर्पयन्ती विवक्षा-
स्फुरिताधरा निःश्वासमधुकरानिवोपांशु संदिशन्ती क्षितितलनिहित-
निश्चलनयना सुचिरमतिष्ठत्। 5

क्रमेण च भूयो मन्मुखे निधाय दृष्टिं पुनःपुनरप्यापूर्यमाणलो-
चनच्युतैर्मदनानलधूमधूसरां वाचमिव क्षालयन्ती बाष्पजलबिन्दुभि-
र्बाष्पजलबिन्दुव्याजेन च विलक्षस्मितस्फुरितैर्दशनांशुभिः साध्वस-
विस्मृतानपूर्वानभिधेयवर्णानिव ग्रथ्नती कथमपि व्याहाराभिमुखमा-
त्मानमकरोत्। अब्रवीच्च माम्। पत्त्रलेखे वल्लभतया तस्मिन्स्थाने न 10
तातो नाम्बा न महाश्वेता न मदलेखा न जीवितं यत्र मे भवती। दर्श-
नात्प्रभृति प्रियासि। न जाने केनापि कारणेनापहस्तितसकलसखीजनं
त्वयि विश्वसिति मे हृदयम्। कमपरमुपालभे। कस्य वान्यस्य
कथयामि परिभवम्। केन वान्येन सह साधारणीकरोमि दुःखम्।
दुःखभारमिममसह्यं निवेद्य भवत्यास्त्यक्ष्यामि जीवितम्। जीवितेनैव 15
शपामि ते। स्वहृदयेनापि विदितवृत्तान्तेनामुना जिह्रेमि किमुता-
परहृदयेन। कथमिव मादृशी रजनिकरकिरणावदातं कौलीनेन कुलं
कलङ्कयिष्यति। कुलक्रमागतां च लज्जां परित्यक्ष्यति। अकन्यकोचिते
वा चापले चेतः प्रवर्तयिष्यति। साहं न संकल्पिता पित्रा न दत्ता
मात्रा नानुमोदिता गुरुभिर्न किंचित्संदिशामि न किंचित्प्रेषयामि ना-
कारं दर्शयामि। कातरेवानाथेव बलादवलिप्तेन गुरुगर्हणीयतां
नीता कुमारेण चन्द्रापीडेन। कथय महतां किमयमाचारः। किं
परिचयस्येदं फलम्। यदेवमभिनवबिसकिसलयतन्तुसुकुमारं मे मनः

परिभूयते। अपरिभवनीयो हि कुमारिकाजनो यूनाम्। प्रायेण प्रथमं मदनानलो लज्जां दहति ततो हृदयम्। आदौ विनयादिकं कुसुमेषुशराः खण्डयन्ति पश्चान्मर्माणि। तदामन्त्रये भवतीं पुनर्जन्मान्तरसमागमाय। न हि मे त्वत्तोन्या प्रियतरा। प्राणपरित्यागप्रायश्चि-
5 त्ताचरणेन प्रक्षालयाम्यात्मनः कलङ्कम्। इत्यभिधाय तूष्णीमभूत्।

अहं तु यत्सत्यमविदितवृत्तान्ततया ह्रीतेव भीतेव विलक्षेव विसंज्ञेव सविषादं विज्ञापितवती। देवि श्रोतुमिच्छाम्याज्ञापय किं कृतं देवेन चन्द्रापीडेन को वापराधः समजनि केन वा खल्वविनयेन खेदितमखेदनीयं देव्याः कुमुदकोमलं मनः। श्रुत्वा प्रथममुत्सृष्टजी-
10 वितायां मयि पश्चात्समुत्स्रक्ष्यसि जीवितम्। इत्येवमभिहिता च पुनरवदत्। आवेदयामि ते। अवहिता शृणु। स्वप्नेषु प्रतिदिवसमागत्यागत्य मे रहस्यसंदेशेषु निपुणधूर्तः पञ्जरशुकसारिका दूतीः करोति। सुप्तायाः श्रवणदन्तपत्त्रोदरेषु व्यर्थमनोरथमोहितमानसः संकेतस्थानानि लिखति। स्वेदप्रक्षालिताक्षरानपि निपतितसाञ्जनाश्रुबिन्दुपङ्क्ति-
15 कथितात्मावस्थानान्मनोहरान्संमोहाशानुवर्तिनो मदनलेखान्प्रेषयति। निजानुरागेण बलादरञ्जयदलक्तकरसेनेव चरणौ। अविनयनिश्चेतनो नखप्रतिबिम्बितमात्मानं बहु मन्यते। उपवनेष्वेकाकिन्या ग्रहणभयपलायमानायाः पल्लवलग्नांशुकदशाप्रतिहतगमनाया गृहीत्वेव सखीभिरर्पिताया मिथ्याप्रगल्भः पराङ्मुखायाः परिष्वङ्गमाचरति। स्तन-
20 स्थले मे लिखन्पत्त्रलतां कुटिलतामिवानृजुप्रकृति प्रकृतिमुग्धं मनः शिक्षयति। हृदयोत्कलिकातरंगवातैरिव शीतलैर्मुखमरुद्भिः श्रमजलसीकरतारकितावलीकचाटुकारः कपोलौ वीजयति। स्वेदसलिलशिथिलितग्रहणगलितोत्पलशून्येनापि करेण यवाङ्कुरानिव नखकिर-

णाच्छुद्धान्दुर्विदग्धः कर्णपूरीकरोति । वल्लभतरबालबकुलसेककाल-
कवलीकृतान्सुरागण्डूषान्सकचग्रहमसकृद्दृष्टो मां पाययति । भवना-
शोकताडनोद्यतान्पादप्रहारान्दुर्बुद्धिविडम्बितः शिरसा प्रतीच्छति । म-
न्मथमूढमानसश्च कथय हे पत्त्रलेखे केन प्रकारेण निश्चेतनो निषि-
ध्यते । प्रत्याख्यानमपीर्ष्या संभावयति । आक्रोशमपि परिहासमाक- 5
लयति । असंभाषणमपि मानं मन्यते । दोषसंकीर्तनमपि स्मरणोपा-
यमवगच्छति । अवज्ञानमप्यनियन्त्रणं प्रणयमुत्प्रेक्षते । लोकापवा-
दमपि यशो गणयतीति ।

तामेवंवादिनीमाकर्ण्य प्रहर्षरसनिर्भरा मनस्यकरवम् । अहो च-
न्द्रापीडमुद्दिश्य सुदूरमाकृष्टा खल्वियं मकरकेतुना । यदि च सत्य- 10
मेव कादम्बरीव्याजेन साक्षान्मनोभवचित्तवृत्तिः प्रसन्ना देवस्य
ततः सहजैः सादरं संवर्धितैः प्रत्युपकृतमस्य गुणैर्यशसा धवलिताः
ककुभो यौवनेन रतिरससागरतरंगैः पातिता रत्नवृष्टिर्यौवनविला-
सैर्लिखितं नाम शशिनि सौभाग्येन प्रकाशिता निजश्रीर्लावण्येनैन्द-
वीभिरिव वृष्टममृतं कलाभिः । तथा च चिराल्लब्धः कालो मलया- 15
निलेन समासादितोवसरश्चन्द्रोदयेन प्राप्तमनुरूपं फलं मधुमासकु-
सुमसमृद्ध्या गतो मदिरारसदोषो गुणतां दर्शितं मुखं मन्मथयुगा-
वतारेणेति । अथाहं प्रकाशं विहस्याब्रुवम् । देवि यद्येवमुत्सृज
कोपं प्रसीद । नार्हसि कामापराधैर्देवं दूषयितुम् । एतानि खलु
कुसुमचापस्य चापलानि शठस्य न देवस्य । इत्येवमुक्तवतीं मां 20
पुनः सकुतूहला सा प्रत्यभाषत । योयं कामः कोपि वा कथय
कानि कान्यस्य रूपाणीति । तामहं व्यजिज्ञपम् । देवि कुतोस्य
रूपम् । अतनुरेष हुताशनः । तथा हि । अप्रकाशयञ्ज्वालावलीः

संतापं जनयति। अप्रकटयन्धूमपटलमश्रु पातयति। अदर्शयन्भस्म रजोनिकरं पाण्डुतामाविर्भावयति। न च तद्भूतमेतावति त्रिभुवने शरशरव्यतां यन्न यातं याति यास्यति वा। गृहीतकुसुमकार्मुकं बाणैर्बलवन्तमपि विध्यति। अपि चानेनाधिष्ठितानां कामिनीनां
5 पश्यन्तीनां चिन्ताप्रियमुखचन्द्रसहस्राणि संकटमम्बरतलं लिखन्तीनां दयिताकारानविस्तीर्णं महीमण्डलं गणयन्तीनां वल्लभगुणानल्पीयसी संख्या शृण्वन्तीनां प्रियतमकथामबहुभाषिणी सरस्वती ध्यायन्तीनां प्राणसमसमागमसुखानि ह्रसीयान्कालो हृदयस्यापततीति।

एतदाकर्ण्य च क्षणं विचिन्त्य प्रत्यवादीत्। पत्त्रलेखे यथा कथ
10 यसि तथा जनोयं कारितः कुमारे पक्षपातं पञ्चेषुणा। यान्यस्यैतानि रूपाणि समधिकानि वा तानि मयि वर्तन्ते। हृदयादव्यतिरिक्तासी दानीं भवतीमेव पृच्छामि। उपदिश त्वं यदत्र मे सांप्रतम्। एवंविधानां वृत्तान्तानामनभिज्ञास्मि। अपि च मे गुरुजनवक्तव्यतां नीताया नितान्तं लज्जिताया जीवितान्मरणमेव श्रेयः पश्यति हृदयम्। इत्येवंवा
15 दिनीं भूयस्तामहमेवमवोचम्। अलमलमिदानीं देवि किमनेनाकारण मरणानुबन्धेन। अनाराधितप्रसन्नेन कुसुमशरेण भगवता ते वरो दत्तः। का चात्र गुरुजनवक्तव्यता यदा खलु कन्यकां गुरुरिव पञ्चशरः संकल्पयति मातेवानुमोदते पितेव ददाति सखीवोत्कण्ठां जनयति धात्रीव तरुणतायां रत्युपचारं शिक्षयति। किमिव कथ
20 यामि ते याः स्वयं वृतवत्यः पतीन्। यदि च नैवमनर्थक एव तर्हि धर्मशास्त्रोपदिष्टः स्वयंवरविधिः। तत्प्रसीद देवि। अलममुना मरणानुबन्धेन शपे ते पादपङ्कजस्पर्शेन। संदिश प्रेषय माम्। यास्यामि आनयामि देवि ते हृदयदयितम्। इत्येवमुक्ते मया प्रीतिद्रवार्द्रया दृष्ट्या

पिबन्तीव मां निरुध्यमानैरपि मकरकेतुशरजर्जरितां भित्त्वेव लज्जां लब्धान्तरैर्निपतद्भिरनुरागविभ्रमैराकुलीक्रियमाणा प्रियवचनश्रवणप्रीत्या च स्वेदाश्लिष्टमुत्क्षिप्य रोमाञ्चजालकेन दधतीवोत्तरीयांशुकं प्रेङ्खत्कुण्डलमाणिक्यपत्त्रमकरकोटिलग्नं च शशिकिरणमयं मरणपाशमिव मकरकेतुना निहितं कण्ठे हारमुन्मोचयन्ती प्रहर्षविह्वलान्तः- 5 करणापि कन्यकाजनसहजां लज्जामिवावलम्ब्य शनैरवदत्।

जानामि ते गरीयसीं प्रीतिम्। केवलमकठोरशिरीषपुष्पमृदुप्रकृतेः कुतः प्रागल्भ्यमेतावन्नारीजनस्य विशेषतो बालभावभाजः कुमारीलोकस्य। साहसकारिण्यस्ता याः स्वयं संदिशन्ति समुपसर्पन्ति वा। स्वयं साहसं संदिशन्ती बाला जिह्रेमि। किं वा संदिशामि। अतिप्रि- 10 योसीति पौनरुक्त्यं तवाहं प्रियात्मेति जडप्रश्नस्त्वयि गरीयाननुराग इति वेश्यालापस्त्वया विना न जीवामीत्यनुभवविरोधः परिभवति मामनङ्ग इत्यात्मदोषोपालम्भो मनोभवेनाहं भवते दत्तेत्युपसर्पणोपायो बलाद्धृतोसि मयेति बन्धकीधार्ष्ट्यमवश्यमागन्तव्यमिति सौभाग्यगर्वः स्वयमागच्छामीति स्त्रीचापलमनन्यरक्तोयं परिजन इति 15 स्वभक्तिनिवेदनलाघवं प्रत्याख्यानशङ्कया न संदिशामीत्यप्रबुद्धबोधनमनपेक्षितानुजीवितदुःखदारुणा स्यामित्यतिप्रणयिता ज्ञास्यसि मरणेन प्रीतिमित्यसंभाव्यमेवेति।

# कादम्बरी।

## उत्तरभागः।



देहद्वयार्धघटनारचितं शरीर-
मेकं ययोरनुपलक्षितसंधिभेदम्।
वन्दे सुदुर्घटकथापरिशेषसिद्ध्यै
सृष्टेर्गुरू गिरिसुतापरमेश्वरौ तौ ॥ १ ॥

व्याधूतकेसरसटाविकरालवक्त्रं
हस्ताग्रविस्फुरितशङ्खगदासिचक्रम्।
आविष्कृतं सपदि येन नृसिंहरूपं
नारायणं तमपि विश्वसृजं नमामि ॥ २ ॥

आर्यं यमर्चति गृहे गृह एव लोकः
पुण्यैः कृतश्च यत एव ममात्मलाभः।
सृष्टैव येन च कथेयमनन्यशक्या
वागीश्वरं पितरमेव तमानतोऽस्मि ॥ ३ ॥

याते दिवं पितरि तद्वचसैव सार्धं
विच्छेदमाप भुवि यस्तु कथाप्रबन्धः।
दुःखं सतां तदसमाप्तिकृतं विलोक्य
प्रारब्ध एव स मया न कवित्वदर्पात् ॥ ४ ॥

गद्ये कृतेपि गुरुणा तु तथाक्षराणि
यन्निर्गतानि पितुरेव स मेनुभावः ।
एकप्लवामृतरसास्पदचन्द्रपाद-
संपर्क एव हि मृगाङ्कमणेर्द्रवाय ॥ ५ ॥

गङ्गां प्रविश्य भुवि तन्मयतामुपेत्य
स्फीताः समुद्रमितरा अपि यान्ति नद्यः ।
आसिन्धुगामिनि पितुर्वचनप्रवाहे
क्षिप्ता कथानुघटनाय मयापि वाणी ॥ ६ ॥

कादम्बरीरसभरेण समस्त एव
मत्तो न किंचिदपि चेतयते जनोयम् ।
भीतोस्मि यत्र रसवर्णविवर्जितेन
तच्छेषमात्मवचसाप्यनुसंदधानः ॥ ७ ॥

बीजानि गर्भितफलानि विकासभाञ्जि
वप्त्रेव यान्युचितकर्मबलात्कृतानि ।
उत्कृष्टभूमिविततानि च यान्ति पोषं
तान्येव तस्य तनयेन तु संहृतानि ॥ ८ ॥

अपि चेदानीमानीतस्यापि कुमारस्य न ददाति तरलतालज्जिता लज्जैव दर्शनम् । मनोभवविकारवेदनाविलक्षं वैलक्ष्यमेव न पुरस्तिष्ठति । अप्रतिपत्तिसाध्वसजडा जडतैव नोपसर्पति । स्वयमुपसर्पणलघु लाघवमेव तत्प्रतिपत्तिस्थैर्यं नावलम्बते । बलात्तदानयनपरा-

ग्रभीता भीतिरेव न संमुखीभवति। अथ कथंचिद्गुरुजनत्रपया वा
ाजकार्यानुरोधेन वा चिरावलोकितसहसंवर्धितबन्धुजनदर्शनसुखेन
ा सुहृन्मुखकमलावलोकनोत्कण्ठया वा पुनरागमनखेदपरिजिहीर्षया
ा निजगृहावस्थानरुच्या वा जन्मभूमिस्नेहेन वानिच्छया वास्य
जनस्योपरि पादपतनेनापि नानेतुमेव पारितो यदा मयि स्नेहात्कृत-5
यत्नयापि प्रियसख्या तदा सुतरामेव न किंचित्। किं चाधुनाप्य-
धिकमुपजातम्। सैवाहं कादम्बरी यानेन कुमारेण मधुमदमुखर-
मधुकरकुलकलकोलाहलाकुलितकोककामिनीकरुणकूजितजनितविरहिज-
नमनोदुःखे विकचदलारविंदवृंदनिष्यन्दानंदितमंदगंधवहसुगंधद-
शदिशि विकसितकुसुमामोदमुकुलितमानिनीमानग्रहोन्मोचनदक्षकु-10
सुमायुधे कर्पूरक्षोदमिश्रचंदनपंकपिंडे कुपितकामिनीविनोददक्षगेय-
मुखरपरिजने पुनरुक्तदर्शनाभ्युत्थानव्रीडितकंचुकिजने प्रदोषसमये
जरठशरकांडविपांडुनिबिडकुंडलोद्घृष्टलडहयुवतिगंडस्थलान्यखंडमंडले
विडंबयति मंडयति गगनं चानवरतविस्फुरद्विशदकरनिकरनि-
र्भगवर्जितज्योत्स्नाजलासारवर्षिणि चंद्रमसि दूरविक्षिप्तदलनिवहकुमु-15
दकाननामोदवासितदिगन्तायाः कुमुदिन्यास्तटे चन्द्रकरस्पर्शप्रवृत्त-
शशिमणिशिखरनिर्झरझंकारिणि क्रीडापर्वतकनितम्बके हृद्यहरिचन्दन-
रसकणिकाजालकच्छलेन तत्करतलस्पर्शसुखसंभवस्वेदजलनिवहमिव
वहति तत्कालहारिणि मुक्ताशिलापट्टशयने कुसुमामोदसुरभितदश-
दिशि तुषारकणनिकरहारिण्यपि बहिरेव देहदाहमात्रकापहारिणि स-20
र्वरमणीयानां संदोहभूते हिमगृहे कुसुमस्रस्तरावलम्बिनी वीक्षिता।
ममापि चापुनरुक्तदर्शनस्पृहे ते एवैते लोचने ययोरालोकनपथमसौ
यातः। तदेव चेदमप्रतिपत्तिशून्यं हतहृदयं येनान्तःप्रविष्टोपि न

पारितो धारयितुम्। तदेव चैतच्छरीरं येन तत्समीपे चिरमुदासीनेन स्थितम्। स एव चायं पाणिर्योलीकगुरुजनापेक्षी नात्मानं परिग्राहितवान्। अनपेक्षितपरपीडश्चन्द्रापीडोपि स एव योत्र वारद्वयमागत्य प्रतिगतः। मय्येवोपक्षीणमार्गणतया चाकिंचित्करोन्यत्र प-
5 ञ्चशरोपि स एव यस्त्वयावेदितो मे।

प्रतिज्ञातं च मया महाश्वेतायाः। त्वयि दुःखितायां नाहमात्मनः पाणिं ग्राहयिष्यामीति। सा तु देवि मैवं स्म मनसि कोः कुमतिरियमतिदारुणोयं पापकारी मकरकेतुः कदाचिददृश्यमाने प्रियजने जनितहृदयानुरागाज्जीवितमप्यपहरतीत्यब्रवीत्। एतदपि
10 नास्त्येव मे। मदनेन वा दैवेन वा विरहेण वा यौवनेन वानुरागेण वा मदेन वा हृदयेन वान्येन वा केनापि दत्तः संकल्पमयः कुमारो जनसंनिधावपि केनचिदविभाव्यमानः सिद्ध इव सर्वदा मे ददाति दर्शनम्। अपि चासाविव नायमकाण्डपरित्यागनिष्ठुरहृदयः। अयमेवास्मद्विरहकातरः। नायं नक्तंदिवं लक्ष्मीसमाकुलः। न
15 पृथिव्याः पतिः। न सरस्वतीमपेक्षते। न कीर्तिशब्दं वर्धयति। पश्यामि चाहर्निशमासीनोत्थिता भ्राम्यन्ती शयाना जाग्रती निमीलितलोचना चलन्ती स्वप्नायमाना च शयने श्रीमण्डपे गृहकमलिनीपूद्यानेषु लीलादीर्घिकासु क्रीडापर्वतके बालगिरिनदिकासु च यथा तमज्ञजनविडम्बनैकहेतुं विप्रलम्भकं कुमारम्। ते तथा
20 कथितमेव मया। तदलमनया तदानयनकथया। इत्यभिदधानातर्कितागतमूर्छेव निमीलिताक्षी पक्ष्माग्रसंपिण्डितनयनजलवर्षिणी विलीयमानेवोत्पीड्यमानेवान्तर्जातमन्युवेगेन तथैव वेदिकावितानाभिरामांशुकावलम्बिन्यां बाहुलतिकायामच्छसलिलस्रोतसि प्रसूतायां मृ-

णालिकायामिव जलाहृतिश्यामारुणतामरसमिवाननमुपावेश्य तूष्णी-
मुत्कीर्णेव तस्थौ।

अहं तु तच्छ्रुत्वा समचिन्तयम्। सत्यमेव गरीयः खलु जीविता-
लम्बनमिदं विनोदश्च वियोगिनीनां यदुत संकल्पमयः प्रियो नितरां
कुलाङ्गनानां विशेषतः कुमारीणाम्। तथा हि। अनेन सार्धमकृत- 5
दूतिकापादपतनदैन्यानि प्रतिक्षणं समागमशतान्यकालरमणीयानि
स्वेच्छाभिसरणसौख्यान्यदूपितकन्यकाभावानि सुरतानि। सुरतेषु
चाकृतस्तनव्यवधानदुःखान्यालिङ्गनान्यजनितव्रणदर्शनव्रीडानि नख-
दन्तक्षतसुखान्यनाकुलितकेशपाशाः कचग्रहमहोत्सवाः शब्दविहीं-
नानि निधुवनान्यनुत्पादितगुरुजनविभावितक्षतवैलक्ष्याण्यधरखण्ड- 10
नविलसितानि। नैनमन्धकारराशिरन्तरयति। न जलधरधारापातः
स्थगयति। न नीहारनिकरस्तिरोदधाति। इत्येवं चिन्तयन्त्या एव मेनु-
रागकथारसप्लावेनेव रक्ततामगाद्दिवसः। तत्क्षणं प्रकटितरागं हृदय-
मिव कादम्बर्यास्त्रपया पलायमानमदृश्यत रविमण्डलम्। पल्लवश-
यनमिव संध्यारागमरचयद्यामिनी। परिचारक इव चन्द्रमणिशि- 15
लातलतल्पमकल्पयत्प्रदोषः। अत्रान्तरे चागत्य स्वं स्वं नियोगम-
शून्यं कुर्वाणा दूरतो दीपिकाधारिण्यो गन्धतैलावसिक्तसुरभिग-
न्धोद्गारिणीभिर्दीपिकाभिर्विरचितचक्रवालिका आलिकाः पर्यवारयन्।
अथ निर्मललावण्यलक्षितानि दीपिकाप्रतिबिम्बानि ज्वलितानि मद-
नसायकशल्यानीवाङ्गलग्नानि समुद्वहन्तीं नवनिरन्तरकलिकाचितां 20
चम्पकलतामिव तथावस्थितां तां पुनर्व्यजिज्ञपम्। देवि प्रसीद।
नार्हस्यखेदार्हा हृदयखेदकारिणं संतापमङ्गीकर्तुम्। संहर मन्युवेगम्।
एषाहमादाय चन्द्रापीडमागतैवेति। अथानेन देवनामग्रहणगर्भेण

मद्वचसा विषापहरणमन्त्रेणेव विषमूर्छिता झटित्युन्मील्य नयने सस्पृहं मामवलोक्य कः प्रदेशेस्मिन्निति परिजनमपृच्छत्।

अथ धवलवसनोल्लासितगात्रयष्टयो द्वारप्रदेशसंपिण्डिताङ्गयः परशुरामशरविवरविनिर्गता इव कलहंसपङ्क्तयः कलहंसकलालाप-
5 मधुररवैः प्रतिवाचमिव प्रयच्छद्भिर्नूपुरैः पतत्कर्णपूरपल्लवोल्लासितैश्चाज्ञाश्रवणाय धावद्भिरिव श्रवणैर्मौक्तिककुण्डलांशुजालकानि स्कन्धदशनिक्षिप्तानि चामराणीव वहन्त्यः समाहतकपोलस्थलैः कुण्डलैर्बलादिव वाह्यमाना वाचालैः कर्णोत्पलमधुकरैः समाज्ञापयेति व्याहरन्त्यः कन्यकाः समधावन्। आज्ञाप्रतीक्षासु च मुखक-
10 मलावलोकिनीषु तासु क्रमेण दृष्टिं पातयन्ती स्निग्धामिन्दीवरस्रजमिव मरकतशिलातले न्यषीदत्। अब्रवीच्च। पत्त्रलेखे न खलु प्रियमिति ब्रवीमि। त्वामिव पश्यन्ती संधारयाम्येव जीवितमहम्। तथापि यद्ययं ते प्रहस्तत्साधय समीहितम्। इत्यभिधायाङ्गस्पृष्टनिवसनाभरणताम्बूलप्रदानप्रदर्शितप्रसादातिशयां मां व्यसर्जयत्।

15 इत्यावेद्य च किंचिदिव नमितमुखी शनैः पुनर्व्यजिज्ञपत्। देव प्रत्यग्रदेवीप्रसादातिशयाहितप्रागल्भ्या दुःखिता च विज्ञापयामि। देवेनाप्येतदवस्थां देवीं दूरीकुर्वता किमिदमापन्नवत्सलायाः स्वप्रकृतेरनुरूपं कृतमिति। चन्द्रापीडस्तु तयोपालम्भगर्भं विज्ञप्तः पत्त्रलेखया तं च कादम्बर्याः स्नेहोक्तिपुरःसरं गम्भीरं च संतापं च सप-
20 रिहासं च साभ्यर्थनं च साभिमानं च सावहेलं च सप्रसादं च सनिर्वेदं च सानुरागं च सार्तिविशेषं च सावष्टम्भं च सकोपं च सात्मार्पणं च ससद्भावं च सोत्प्रासं च सोपालम्भं च सानुक्रोशं च सस्पृहं च सावधारणं च मधुरमपि दुःश्रवं सरसमपि शोषहेतुं कोम-

लमपि कठोरं नम्रमप्युन्नतं पेशलमप्यहंकृतं ललितमपि प्रौढमालाप-
माकर्ण्योत्प्रेक्ष्योत्प्रेक्ष्य च स्तिमितपक्ष्मतया दुर्विषहदु:खबाष्पोपप्लुता-
यताक्षं तन्मुखं स्वभावधीरप्रकृतिरपि नितरां पर्याकुलोऽभवत्।

अथ कादम्बरीशरीरादिवालापपदैरेव सहागत्य युगपद्गृहीतो हृ-
दये मन्युना कण्ठे जीवितेनाधरपल्लवे वेपथुना मुखे श्वसितेन ना- 5
साग्रे स्फुरितेन चक्षुषि च बाष्पेण च तुल्यवृत्तिर्भूत्वा कादम्बर्याः क्ष-
रद्बाष्पविक्षेपपर्याकुलाक्षरमुच्चैः प्रत्युवाच। पत्त्रलेखे किं करोमि। अनेन
दुरात्मना दु:शिक्षितेन ज्ञानाभिमानिना पण्डितंमन्येन दुर्विदग्धेन दुर्बु-
द्धिनालीकधीरेण स्वयंकृतमिथ्याविकल्पशतसहस्रभरितेनाश्रद्दधानेन
मूढहृदयेन यद्यदेवानेकप्रकारं शृङ्गारनृत्ताचार्येण भगवता मनोभवे- 10
नान्तर्गतविकारावेदनाय मामुद्दिश्य बाला बलात्कार्यते तत्तदेवादृष्ट-
पूर्वत्वाद्दिव्यकन्यकानां रूपानुरूपलीलासंभावनया च तावतो मनोरथ-
स्याप्यात्मन उपर्यसंभावनया च सर्वं सहजमेवैतदस्या इति विकल्प-
संशयदोलाधिरूढं मां ग्राहयतैवमीदृशस्य देव्या दु:खस्य तव चोपाल-
म्भस्य हेतुतां नीतोऽस्मि। मन्ये च ममापि मनोव्यामोहकारी कोऽपि 15
शाप एवायम्। अन्यथाप्रबुद्धबुद्धेरपि येषु न संदेह उपपद्यते तेष्वपि
स्फुटेषु मदनचिह्नेषु कथं मे धीर्व्यामुह्येत। तिष्ठन्त्वेव तावदतिसू-
क्ष्मतया दुर्विभाववृत्तीनि तानि स्मितावलोकितकथितविहृतलीला-
लज्जायितानि यान्यन्यथापि संभवन्ति। चिरानुभूतात्मकण्ठसंसर्गसु-
भगं हारमिममकृतपुण्यस्य मे तत्क्षणमेव कण्ठे कारयन्त्या किमिव 20
नावेदितम्। अपि च हिमगृहकवृत्तान्तस्तु तवापि प्रत्यक्ष एव।
तत्किमत्र प्रणयकोपाक्षिप्तयाप्यन्यथा व्याहृतं देव्या। सर्व एवायं
विपर्ययान्मम दोषः। तदधुना प्राणैरप्युपयुज्यमानस्तथा करोमि

यथा नेदृशमेकान्तनिष्ठुरहृदयं जानाति मां देवी। इत्येवं वदत्येव चन्द्रापीडे आविशैव प्रविश्य वेत्रहस्ता प्रतीहारी कृतप्रणामा व्यज्ञापयत्। युवराजैवं देवी विलासवती समादिशति। कृतजल्पात्परिजनतः श्रुतं मया यथा किल पृष्ठतः स्थिताद्य पत्त्रलेखात्र पुनः 5 परागतेति। न च मे त्वय्यस्यां च कश्चिदपि स्नेहस्य विशेषो विलसतीति मयैवेयं संवर्धिता। अपि च तवापि कापि महती वेला वर्ततेदृष्टस्य। तदनया सहित एवागच्छ। मनोरथशतलब्धमतिदुर्लभं ते मुखकमलालोकनमिति।

चन्द्रापीडस्तु तदाकर्ण्य चेतस्यकरोत्। अहो संदेहदोलारूढं मे 10 जीवितम्। एवमम्बा निमेषमपि मामपश्यन्ती दुःखमास्ते। पत्त्रलेखामुखेन चैवमाज्ञापितमागमनाय मे निष्कारणवत्सलेन देवीप्रसादेन आजन्मक्रमाहितो बलवाञ्जननीस्नेहः। वाञ्छाकुलं हृदयम्। अमोच्यं तातचरणशुश्रूषासुखम्। प्रमाथी मन्मथहतकः। हारिणी गुरुजनलालना। दुःसहान्युत्कण्ठितानि। अनुबन्धिनी बान्धवप्रीतिः 15 कुतूहलिन्यभिनवप्रार्थना। मुखावलोकिनः कुलक्रमागता राजानः जीवितफलं प्रियतमामुखावलोकनम्। अनुरक्ताः प्रजाः। गरीयान्गन्धर्वराजसुतानुरागः। दुस्त्यजा जन्मभूमिः। परिग्राह्या देवी कादम्बरी। कालातिपातासहं मनः। विप्रकृष्टमन्तरं हेमकूटविन्ध्याचलयोः। इत्येवं चिन्तयन्नेव प्रतीहार्योपदिश्यमानवर्त्मा पत्त्रलेखा- 20 करावलम्बी जननीसमीपमगात्। तत्रैव च तमनेकप्रकारजननीलालनसुखाचिन्तितदुर्विषहहृदयोत्कण्ठं दिवसमनयत्।

उपनतायां चात्मचिन्तायामिवान्धकारितदशदिशि शर्वर्यामनिवार्यविरहवेदनोन्मथ्यमानमानसाकुलेषु कलकरुणमुखैर्व्याहरत्सु चक्र

वाकयुगलेधूत्तेजितस्मरशरं समुत्सर्पमाणेषु चन्द्रमसोङ्कोल्लधूलिधूस-
रालोकेष्वग्रमयूखेषु विजृम्भमाणकुमुदिनीश्वासपरिमलग्राहिणि मन्दं
मन्दमावातुमारब्धे प्रदोषानिले च शयनवर्ती निमीलितलोचनोऽप्यप्रा-
प्तनिद्राविनोदः हेमकूटागमनखेदान्निपत्य विश्रान्तेनेव पादपल्लवच्छा-
यायां जङ्घानुरोधिरोहिणा लग्नेनेव सुसंहतयोरूर्वोर्लिखितेनेव विस्ता- 5
रिणि नितम्बफलके मग्नेनेव नाभिमुद्रायामुल्लसितेनेव रोमराज्यामा-
रूढेनेव त्रिवलिसोपानहारिणि मध्यभागे कृतपदेनेवोन्नतिविस्तारशा-
लिनि स्तनतटे मुक्तात्मनेव बाह्वोः कृतावलम्बनेनेव हस्तयोराश्लिष्टे-
नेव कण्ठे प्रविष्टेनेव कपोलयोरुत्कीर्णेनेवाधरपुटे ग्रथितेनेव नासि-
कासूत्रे समुन्मीलितेनेव लोचनयोः स्थितेनेव ललाटशालायामन्वि- 10
तेनेव चिकुरभारान्धकारे प्लवमानेनेव सर्वदिक्पथप्लाविनि लावण्यपू-
रप्लवे मनसा सस्मार स्मरायतनभूतस्य कादम्बरीरूपस्य।

उत्पन्नात्मीयबुद्धिश्च निर्भरस्नेहार्द्रचेतास्तत एव वासरादारभ्य तां
प्रति गृहीतरक्षापरिकर इव यतो यत एव मण्डलितकुसुमकार्मुकं
मकरध्वजमस्यां प्रहरन्तमालोकितवांस्ततस्तत एवात्मानमन्तरेऽर्पित- 15
वान्। एवमम्लानमालतीकुसुमकोमलतनौ निर्घृणं प्रहरन्न लज्जस
इत्युपालभमान इव दिवसमुत्तरलतारयान्तर्बाष्पार्द्रया दृष्ट्या कुसु-
मचापं पुनः स्मरशरप्रहारमूर्छितां संज्ञामिव लम्भयितुं तामवयवैरु-
वाह स्वेदजललवानुत्ससर्ज च दीर्घदीर्घान्निश्वासमारुतान्। तच्चेतना-
लम्भमुदित इव च सर्वाङ्गीणं क्षणमपि न मुमोच रोमाञ्चम्। सह्यते 20
हृदयेन वेदना न वेति तद्वार्तां प्रष्टुमिव नियुक्तेन मनसा शून्यता-
मधार्षीत्। तत्प्रतिवार्ताकर्णनायेव च गृहीतमौनः सर्वदैवातिष्ठत्।
तदाननालोकनान्तरितमिव सर्वमेव नाद्राक्षीत्। चन्द्रबिम्बेऽपि नास्य

दृष्टिररमत। तदालापपरिपूरितश्रोत्रेन्द्रिय इव न किंचिदप्यपरमन्तः कर्णे कृतवान्। वीणाध्वनयोप्यस्य बहिरेवासन्। सुभाषितान्यपि न प्रवेशमलभन्त। सुहृद्वाचोपि परुषा इवाभवन्। बान्धवजनजल्पितान्यपि नासुखायन्त। भावावगमभीत्येव यथापूर्वं न कस्यचिद्दर्शनमदात्। अनवरतमुक्तज्वालेन मदनहुतभुजान्तर्दह्यमानोपि गुरुजनत्रपया सद्यः समुद्धृताद्रारविन्दशयनमभजत। न सरसबिसलताजालानि गात्रेष्वकरोत्। न जललवमौक्तिकक्षोदतारकितान्यजठरपद्मिनीपत्त्राणि पार्श्वेप्यकारयत्। न कुसुमपल्लवस्रस्तररचनामादिदेश। नानवरतधारानिपातोल्लसितशिशिरसीकराबद्धदुर्दिनं ददर्शापि धारागृहम्। न मकरन्दसंततसंपातशीतलाभ्यन्तराणि हर्म्योद्यानलताभवनान्यप्यसेवत। न मलयजजलल्लुलितपृष्ठेषु मणिकुट्टिमेष्वप्यलुठदिच्छया। न तुहिनकरकरनिकरसंक्रान्तिहृद्येषु ललनाकरकलितचन्द्रकान्तमणिदर्पणेष्वप्यसंक्रामयदात्मसंपातम्। किं बहुना। नाङ्गयानहरिचन्दनरसचर्चामप्याचरणाददापयत्।

एवमेव केवलं रात्रौ दिवा चाकृतनिर्वृति ज्वलताप्यदहनात्मके दहताप्यक्षतस्नेहेन्धनेन दुःखानुभावनायेव भस्मसादकुर्वता मदनदहनेनान्तर्बहिश्च क्वाथ्यमानदेहः शोषमगात्। आर्द्रतां पुनः प्रतिक्षणाधीयमानवृद्धिं नात्याक्षीत्। एवं च निष्प्रतिक्रियतया दुस्त्यजतयातिविसंष्ठुलेनोपास्यमानोपि मनसिजेनाकारमेव लोकलोचनेभ्योरक्षन्न कुसुमशरसायकेभ्यो जीवितम्। तनोरेव तानवमङ्गीचकार न लज्जायाः। शरीरस्थितावेवानादरं कृतवान्न कुलक्रमस्थितौ। प्रजा एवान्वरुध्यत न मन्मथोत्कलिकाः। सुखमेवावधीरयामास न धैर्यम्। एवं चास्य पुरः कादम्बरीरूपगुणावष्टम्भाहितप्राणे

वलवतानुरागेणाकृष्यमाणस्य पश्चाद्गुरुजनप्रतिबन्धदृढतरेण महीयसा स्नेहेन च वार्यमाणस्य गम्भीरप्रकृतेः सरित्पतेरिव चन्द्रमसा सुदूरमुल्लास्यमानस्यापि मर्यादावशादात्मानं स्तम्भयतः कथंकथमपि कतिपयेष्वपि सहस्रसंख्यायमानेष्वतिक्रान्तेषु वासरेष्वेकदा रणरणकसकाशादिवान्तरलब्धावस्थानो निर्गत्य बहिर्नगर्यास्तरंगसङ्गशी- 5 तसीकरासारमरुन्ति कलकणितकलहंसचक्रवाकचक्रवालाक्रान्तसरससुकुमारसैकतानि सिप्रातटान्यनुसरन्नातिदूरमिव चरणाभ्यामेव वभ्राम। भ्राम्यंश्च रुद्रतनयायतनं रयेणागच्छतः सावष्टम्भया गत्या त्वरितखुरसंचारान्युज्यमानांश्च विरलीभवतश्च संघटमानांश्च विश्लिष्यतश्चोत्सहमानांश्च लम्बमानांश्च परापततश्च विच्छिन्नपङ्क्तिव्यवस्थाना- 10 न्स्वलतोपि पततोप्यवसीदतोपि यथाशक्ति सादिभिरुत्पीडिताङ्घ्रिःसहतया दूरागमनखेदमतित्वरयागमनकार्यगौरवमावेदयतो दूरादेवातिवह्ननिव तुरंगमानद्राक्षीत्। दृष्ट्वा चोत्पन्नकुतूहलस्तेषां परिज्ञानायान्यतमं पुरुषं प्राहिणोत्। आत्मनाप्यूरुदघ्नेन पयसोत्तीर्य सिप्रां तस्मिन्नेव भगवतः कार्तिकेयस्यायतने तत्प्रतिवार्तां प्रतिपालयन्न- 15 तिष्ठत्।

तत्रस्थश्च कुतूहलात्तस्मिन्नेव वाजिवृन्दे निक्षिप्तदृष्टिः पार्श्वस्थितां हस्तेनाकृष्य पत्त्रलेखामवादीत्। पत्त्रलेखे पश्य य एष पुर एवार्ककिरणनिवारणोल्लासितया प्रेङ्खदालोललम्बाशिखया मयूरपिच्छमय्या छत्रिकया दुर्विभाव्यवदनोश्ववारो ज्ञायते केयूरकोयमिति। 20 यावत्तया सहैवं निरूपयत्येव तावत्तस्मात्प्रहितपुरुषादुपलब्धात्मावस्थानं दृष्टिपथ एवावतीर्य तुरंगमादापतन्तं दूराद्द्रुतागमनधूलीधूसरश्यामीकृतशरीरं परिवर्तितमिवेतराकारेणोज्झिताङ्गरागसंस्कारम-

लिनेन वपुषा विषादशून्येन च मुखेनान्तर्दुःखसंभारपिशुनया च दृष्टथा दूरत एवापृष्टामपि कष्टां कादम्बरीसमवस्थामनक्षरमावेदय-न्तं केयूरकमद्राक्षीत् । दृष्टा च दर्शितप्रीतिरेह्येहीत्याहूय ससंभ्रम-प्रणतोपसृतमतिदूरप्रसारिताभ्यां दोर्भ्यां पर्यष्वजत तम् । अप-5 सृत्य पुनः कृतनमस्कारे तस्मिन्ननामयप्रश्नवचसा संवर्ध्य सर्वानेव तत्सहायान्पुरः स्थितं पुनः पुनः सस्पृहमालोक्य केयूरकमवादीत् । केयूरक त्वद्दर्शनेनैव भद्रं देव्याः सपरिवाराया इत्येतदावेदितम् । आगमनकारणमपि विश्रान्तः सुखितः कथयिष्यसि । इत्युक्त्वा संभ्रा-न्तागतारोहकढौकितां करिणीमारुह्य कुतोस्य जनस्य सुखितेत्यभिद-10 धानमेव केयूरकं पृष्ठतः पत्त्रलेखां चारोप्य स्वभवनमयासीत् । तत्र च निषिद्धाशेषराजलोकप्रवेशः प्रविश्य वल्लभोद्यानं सपरिवारेण केयूरकेण सहोत्ताम्यता चेतसा चेतितमेव दिवसकरणीयं निर्वर्तया-मास । निर्वर्त्य च पत्त्रलेखाद्वितीयः सुदूरोत्सारितपरिजनः केयूर-कमाहूयाब्रवीत् । केयूरक कथय देव्याः कादम्बर्याः समदलेखाया 15 महाश्वेतायाश्च संदेशम् ।

इत्यभिहितवति चन्द्रापीडे पुरः सप्रश्रयमुपविश्य केयूरकोप्यगा-दीत् । देव किं विज्ञापयामि । नास्ति मयि संदेशलवोपि देव्याः का-दम्बर्याः समदलेखाया महाश्वेताया वा । यदैव पत्त्रलेखां मेघनादाय समर्प्यागतेन प्रतिनिवृत्य मयायं देवस्योज्जयिनीगमनवृत्तान्तो निवेदि-20 तस्तदैवोर्ध्वं विलोक्य दीर्घमुष्णं च निश्वस्य सनिर्वेदमेवमेतदित्युक्त्वो-त्थाय महाश्वेता पुनस्तपसे स्वमेवाश्रमपदमाजगाम । देव्यपि कादम्बरी झटिति हृदये द्रुघणेनेवाभिहतातर्कितापतिताशनिनेव मूर्ध्नि ताडितान्तः-पीडाकूणननिमीलितेन चक्षुषा मूर्छितेव मुषितेव परिभूतेव वञ्चितेव

चोन्मुक्तेव चान्तःकरणेनाविदितमहाश्वेतागमनवृत्तान्ता चिरमिव स्थि-
त्वोन्मील्य नयने विलक्षेव लज्जितेव विस्मृतेव विस्मयस्तब्धदृष्टिर्म-
हाश्वेतायाः कथयेति सासूयमिव मामादिश्य मदलेखायां पुनर्वलित-
मुखी सविलक्षस्मितं मदलेखेस्ति केनचिदपरेणैतत्कृतं करिष्यते वा
यत्कुमारेण चन्द्रापीडेनेत्येवमभिदधत्युत्थाय निवारिताशेषपरिजन- 5
प्रवेशा शयनीये निपत्योत्तरवाससोत्तमाङ्गमवगुण्ठ्य निर्विशेषहृदय-
वेदनां मदलेखामप्यनालपन्ती सकलमेव तं दिवसमस्थात्। परेद्युश्च
प्रातरेवोपसृतं मामेवं दृढतरशरीरेषु म्रियमाणेष्विव भवत्स्वहमीदृ-
शीमवस्थामनुभवामीत्युपालभमानेव न मे भवद्भिः पार्श्ववर्तिभिः का-
र्यमिति निर्भर्त्सयन्तीव किं मे पुरस्तिष्ठसीत्यन्तर्मन्युवेगेन तर्जयन्तीव 10
च बाष्पपूरोद्रेकोत्कम्पपर्याकुलया दृष्ट्या चिरमालोकितवती तथा
दृष्टश्च दुःखितया देव्यादिष्टमेव गमनायात्मानं मन्यमानोहमनिवे-
द्यैव देव्यै देवपादमूलमुपागतोस्मि। तच्च देवैकशरणजनजीवितपरि-
त्राणाकुलमतेः केयूरकस्य विज्ञापनाकर्णनावधानदानेन प्रसादं कर्तु-
मर्हति देवः। देव श्रूयताम्। यदेव ते प्रथमागमनेनामोदिना मलया- 15
निलेनेव चलितं समस्तमेव तत्कन्यकालतावनं तदैव सकलभुवन-
मनोभिरामं भवन्तमालोक्य वसन्तमिव रक्ताशोकतरुलतामिवारूढ-
मन्मकरकेतनस्ताम्। इदानीं तु महान्तमायासमनुभवति त्वदर्थे
कादम्बरी। तस्या हि दिनकरोदयादारभ्य दिवसकरकान्तोपलान-
लस्येव निःशब्दस्यापवनेरितस्याधूमस्याभस्मनः प्रज्वलतो मकरध्व- 20
जहुतभुजो न परिजनकरकमलकलितकोमलपल्लवलास्यलीलया प्रस-
मः। नानुत्तालतालवृन्तवान्तजलजडकणिकासारसेकेन निवृत्तिः।
न सरसहरिचन्दनपङ्कच्छटाच्छुरणेन छेदः। न विदलितमुक्ताफल-

वालुकापटलोद्धूलनेन व्युपरमः । नोत्कीलितयन्त्रमयकलहंसपङ्क्तिमु-
क्ताम्बुधारेण धारागृहेण प्रशमः । यथा यथा चलितजलयन्त्रविग-
लिताभिरतिशिशिरसीकरनिकरतारकिताभिरम्बुधाराभिराहन्यते तथा
तथा वैद्युतानलसहोदर इव स्फुरति मदनपावकः । सुतरां च
5 शिशिरः कुन्दकलिकाकलापमञ्जरीमिव विकासयति स्वेदजललव
जालकसंततिमुपचारः । चित्रं चेदम् । मकरकेतुहुतभुजा दह्यमान
मप्यग्निशौचमंशुकमिव नितरां निर्मलीभवति लावण्यम् । मन्ये च
मृदुस्वभावमपि जलमिव मुक्ताफलतामुपगतं कठिनीभवत्युत्क
ण्ठितं हृदयमबलाजनस्य । यत्तादृशेनातिसंतापेनापि न विलीयते
10 बलवती खलु वल्लभजनसंगमाशा । यत्तथाविधमप्यनुभववेदनाविह्व
लितप्राणमतिकष्टं प्राण्यते । किं करोमि । कथय कथं कथ्यते कया
वृत्त्या वर्ण्यते कीदृशेनोपायेन प्रदर्श्यते केन प्रकारेणावेद्यते कया
युक्त्या प्रकाश्यते कतमया वेदनयोपमीयते बलवती तदुत्कण्ठा
स्वप्नेषु विगलितवेदनाः स्फुटं प्राणिनः । प्रतिदिनं दृश्यमानोपि य
15 पश्यसि तामीदृशीमवस्थाम् । प्रचण्डकिरणसहस्रातपसहानि क
लानि शयनीकृतानि म्लानिमुपनयन्त्या दिवसकरमूर्तिरपि निर्जि
तया निजोष्मणा । निष्करुणेन चाकारणवामेन कामेन म
मानास्तास्ताश्चेष्टाः करोति । तथा हि । सासोढमदनवेदने त्व
तिकठिने मनसि निवससीति मृदुनि कुसुमशयने कथमपि स
20 जनेन पात्यते । कुसुमशयनगता च संतापगलितचरणतलाल
कलवपाटलितैः शय्याकुसुमैः कुसुमशरेण शरतामुपनीतैः स
धिरैरिव हृदयात्पतितैर्भयमुपजनयति । सर्वाङ्गीणमनङ्गशर
वारणाय कवचमिव भवदनुस्मरणरोमाञ्चमुद्वहति । रोमाञ्चि

कुचयुगले श्वासगलितमंशुकं निदधाना त्वत्पाणिग्रहणतृष्णया कण्ट-कशयनव्रतलीलामिव दक्षिणकरकमलमनुभावयति । वामं तु वाम-कपोलभरजडाङ्गुलिमुल्लसत्पद्मरागवलयप्रभांशुरज्यमानं ज्वलितमद-नहुताशनविप्लुष्यमाणमिव हस्तकमलं विधुनोति । नलिनीदलव्य-जनपवनविक्षिप्यमाणकर्णकुवलयदलं वदनमजस्रस्रवदश्रुभयपलाय- 5 मानलोललोचनमिव बिभर्ति । प्रतिक्षणं क्षामतां व्रजन्ती न केवलं मङ्गलवलयं पतनभयेन दोलायमानं हृदयमपि मुहुर्मुहुः पाणिपल्लवेन रुणद्धि । शिशिरवारिक्षोदक्षारिण्या लीलाकमलमालिकयेव वपुषि निहितया सखीजनहस्तपरंपरया परिक्लाम्यति । तथा चरणयुगलेन रसनाकलापं नितम्बविस्तारेण मध्यं संगमाशया हृदयं हृदयेन भव- 10 न्तमुरसा बिसिनीपलाशप्रावरणं कण्ठेन जीवितं करकमलेन कपो-लपालीं त्वदालापेनाश्रुपातं ललाटफलकेन चन्दनलेखिकामंसेन वेणी-मधुना धारयति । त्वद्दिदृक्षया विघटमानं हृदयमभिवाञ्छति । गो-त्रस्खलनेनेव जीवितेन लज्जते । प्रियसख्येव मूर्छया मनसि मुहु-र्मुहुः स्पृश्यते । परिजनेनेव रणरणकेन मदनपरवशा कुसुमशय- 15 नादुत्थाप्यते । परिचारिकयेवार्त्या स्रस्ताङ्गी संचार्यते । मुहुः पव-नप्रेङ्खोलितमुत्कण्ठाव्यजनपल्लवभङ्गभयकम्पितमिव लतामण्डपमधि-वसति । मुहुः सत्कोशकलिकं बिसवलयसंरक्षणरचिताञ्जलिपुटमिव स्थलनलिनीवनमधिशेते । मुहुरुद्बन्धनभयादिव निरन्तरकिसलयाच्छा-दितलतापाशमुद्यानमासेवते । मुहुर्निपतदविरतरोदनाताम्रनयनप्रति- 20 बिम्बं स्रस्तरास्तरणत्रासनिमज्जत्कमलामिवोपवनसरोजलमवगाहते । तस्मादुत्थाय तमालवीथीमुपैति । तस्यां शाखावलम्बोर्ध्वभुजलतानि-हितनिमीलितलोचनवदना चम्पकदलमालिकोद्बद्धदेहाशङ्कामुत्पाद-

यन्ती मुहूर्तं विश्रम्य संगीतकगृहमाविशति । ततो मधुरमुरजरव-
लयललितलास्यलीलयोद्वेज्यमाना मयूरीव मुक्तधारं धारागृहमभिप-
तति । ततोपि घनजलधारासीकरपुलकितकाया कदम्बकलिकेव
कम्पमाना शुद्धान्तकमलिनीतीरमुपसर्पति । तस्माच्च भवनकलहंसर-
5 वमसहमाना प्रस्थिता तत्कालावतारितनूपुरयुगला निपुणप्रेक्षामिव
क्षामतामभिनन्दति । वलयरचनाम्लापितमृणालकुपितैरिव भवनवापी-
चक्रवाकमिथुनैः कूजितेन खेद्यते । शय्याविलासमृदितकुसुमसंचया-
मर्षितैरिव प्रमदवनमधुकरैर्विरुतेनोद्वेज्यते । निर्भरोत्कण्ठागीतनिर्जि-
तरवरोषितैरिवाङ्गणसहकारपिकवृन्दैः कलकलेनाकुलीक्रियते । मद-
10 नपाण्डुगण्डपरिभूतगर्भपत्त्रकान्तिभिर्विद्धेवोद्यानकेतकीसूचिभिरुद्भूतवे-
दना भवति । एवंप्रायैश्च मदनदुश्चेष्टितायासैः परिणाममुपैति दिवसः।

चन्द्रोदये चास्यास्तिमिरमयीवापैति धृतिः । कमलमयमिव दू-
यते हृदयम् । कुमुदमय इव विजृम्भते मकरकेतनः । चन्द्रकान्त-
मयमिव प्रक्षरति नयनयुगलम् । उदधिजलमयानीव वर्धन्ते श्वसि-
15 तानि । चक्रवाकमया इव विघटन्ते मनोरथाः । शीतज्वरातुरेव
मणिकुट्टिमोदरसंक्रान्तस्य तुषारकिरणमण्डलस्योपरि वेपथुलुलिततर-
लाङ्गुलिनिकरं करयुगलं प्रसारयन्ती शशिसंतापमनक्षरं कथयति ।
सीत्कारेषु दशनांशुव्याजेन मन्मथशरजर्जरितहृदयप्रविष्टानिन्दुकिर-
णानिवोद्गिरति । वेपथुषु व्यजनीकृतकदलीदलकम्पोपदेशमिव गृह्णा-
20 ति । विजृम्भिकासु कण्ठागतजीवितनिर्गममार्गमिवोपदिशति । गोत्र-
स्खलितविलक्षस्मितेषु हृदयनिपतितमदनशरपुष्परज इव वमति ।
बाष्पमोक्षेषु स्थूलाश्रुसंतानवेणिकावाहिनी विलीयत इव । शशिम-
णिदर्पणेषु विस्फुरितानेकप्रतिबिम्बनिभेन शतधेव विदलति । कुसुम-

शयनेषु परिमललालसागतालिमालाकुलिता धूमायत इव । अमल-
कमलस्रस्तरेषु किञ्जल्करजःपुञ्जपिञ्जरिता ज्वलतीव । स्वेदप्रती-
कारेषु विशदकर्पूरक्षोदधूलीधवलिता भस्मीभवतीव । न विज्ञायते किं
मुग्धतया किं विलासेन किमुन्मादेन संगीतकमृदङ्गध्वनितेषु केका-
शङ्कया धारागृहमरकतमणिमयूरमुखानि स्थगयति । दिवसाव- 5
सानेषु विश्लेषभीता मृणालसूत्रैश्चित्रभित्तिविलिखितानि चक्रवाक-
मिथुनानि संघट्टयति । चिन्तारतारम्भेषु मणिप्रदीपानवतंसोत्पलै-
स्ताडयति । उत्कण्ठालेखेषु संकल्पसमागमाभिज्ञानानि लिखति ।
दूतीसंप्रेषणेषु स्वप्नापराधोपालम्भान्संदिशति ।

अपि च तस्याश्चन्दनपरिमल इव दक्षिणानिलेन सह समागच्छति 10
मोहः । चक्राह्वशाप इव निशया सहापतति प्रजागरत्रासः । प्रतिरु-
तानीव वलभीकपोतकूजितैः सहाविर्भवन्ति दुःखानि । मधुकर इवोप-
वनकुसुमामोदेन सहोपसर्पति मरणाभिलाषः । तथा च जलकणिकेव
पद्मिनीपलाशस्थिता कम्पते । प्रतिच्छायेव स्फटिकोपलसलिलम-
णिदर्पणमणिकुट्टिमतलेषु दृश्यते । नलिनीव शशिकरस्पर्शेन म्लायति । 15
हंसीव सरसमृणालिकाहारव्यतिकरेण जीवति । शरदिव कुमु-
दकुवलयकमलसंपर्कमनोहरगन्धवहा सकुसुमबाणा च विजृम्भते ।
चन्द्रमूर्तिरिव कमलप्रकरस्खलितपादपल्लवा संचरन्ती निशां नयति ।
कुमुदिनीव रजनिकरकिरणकृतप्रजागरा दिवसमलीकनिद्रयाति-
वाहयति । 20

मुररिपुजलशयनलीलेव मन्दोच्छ्वसितशेषा निमीलितलोचना कि-
मपि चिन्तयति । मलयनिम्नगेव सरसहरिचन्दनकिसलयलाञ्छि-
तेषु शिलातलेष्वभिपतति । कुन्दकलिकेव तुषारसिक्तपल्लववर्तिनी

वनानिलेनायास्यते । भुजंगीवासह्यसंतापालिङ्गितचन्दना शिखिशकु-
न्तकुलकोलाहलेन ताम्यति । हरिणीव केसरिकाननं परिहरति।
कुसुमघटितशिलीमुखमनोहरान्मदनचापादिव प्रमदवनात्त्रस्यति।
जानकीव पीतरक्तेभ्यो रजनिचरेभ्य इव चम्पकाशोकेभ्यो बिभेति।
5 उषेव स्वप्नसमागमेनापि कृतार्थतामेति । ग्रीष्मलक्ष्मीरिवानुदिनम-
तिक्षामा भवति । सर्वथा तस्याः कन्दर्पवेदनयाङ्गानि दिवसैर्जी-
वितसंधारणवस्तूनि वलयरचनया गृहकमलिनीमृणालान्युपदेशैः स-
खीजनवचनानि शय्यापरिकल्पनेनोपवनकुसुमान्यनवरतमोक्षेण मद-
नायुधानि निःशेषं क्षीणानि । किं बहुना । संप्रति तस्यास्त्वन्नामा
10 सर्वसखीजनस्त्वत्संबद्धानि सर्वरहस्यानि त्वत्समागमोपायान्वेषिणः
सर्वसमवायास्त्वद्वार्तोपलम्भनतत्पराः सर्वप्रश्नास्त्वद्वृत्तान्तमुखरः प-
रिजनस्त्वदालापनिर्मिताः सर्वविनोदास्त्वदाकारमयश्चित्रकलाभ्यास-
स्त्वदुपालम्भगर्भा मागधीमङ्गलगीतयस्त्वद्दर्शनपुनरुक्ताः स्वप्नास्त्व-
त्परिहासप्राया मदनज्वरदाहविप्रलापास्त्वन्नामग्रहणैकोपायगम्यप्रबोधा
15 मोहमहावेगाः ।

इत्यावेदयन्तं केयूरकं भवतु संप्रति न शक्नोम्यतः परं श्रोतु-
मित्यामीलनाद्दत्तसंज्ञेव कादम्बरीव्यथाश्रवणवेदनासंभवनानुकम्पयेव
चन्द्रापीडमाक्रामन्ती मूर्छा न्यवारयत् । न तु पुनरवस्थानिवेदनप-
रिसमाप्तिः ।

20 तथा मूर्छानिमीलितश्च तामेवानुध्यायन्निव ससंभ्रमप्रतिपन्नश-
रीरेण केयूरकेण संभाविततालवृन्तया च पत्त्रलेखयानुभाव्यार्थ-
सज्जया च नियत्या संज्ञां लम्भितश्चन्द्रापीडः स्वकृतपीडापराधेन
भीतमिव लज्जितमिव विलक्षमिव निभृतस्थितं केयूरकमन्तर्बा-

ष्पोपरुध्यमानकण्ठः कथमपि स्खलिताक्षरं प्रत्युवाच। केयूरक येन प्रकारेणैवमेकान्तनिष्ठुरहृदयमात्मन्यनुत्पन्नानुरागमेव मां संभाव्य देव्या कादम्बर्या दूरीकृतपुनर्मदागमनसंभावनया न त्वमागमनायादिष्टो न संदिष्टं वा किंचिन्महाश्वेतया समुपहृतानुबन्धया मदलेखया वा त्वन्मुखेन नोपालब्धोस्मि तथा मयि पत्त्रलेखया सर्वमाख्यातम्। तदभिजाततया महानुभावत्वादुदारतया समानशीलतया दक्षिणतया चैकान्तपेशलतया च स्वभावस्यात्मानमात्मना न कलयति देवी कादम्बरी। चन्द्रमूर्तेरालोकेन निश्चेतनस्य चन्द्रकान्ताख्यस्य पाषाणखण्डस्यार्द्रभावोपगमनमेवायत्तं न पुनस्तत्कराकर्षणम्। नितरां पक्षपातिनोपि च मधुकरस्याभिगमनमेवाधीनम्। मकरन्दलाभे तु कलिकाश्रयिणी जृम्भैव प्रभवति। दिवससंतापक्लान्तेन चोन्मुखता कुमुदाकरेण करणीया। विकासयति पुनस्तं ज्योत्स्नाभिरामा रजन्येव। निर्भरमन्तःसरसतायां सत्यामपि मधुमासलक्ष्मीपरिग्रहाद्विना पल्लवानुरागदर्शनस्य कृते किं करोतु पादपः। तत्र देव्याः कादम्बर्या एवाज्ञापराधिनी। ययाधरस्पन्दितमात्रप्रतीक्षे पुरःस्थायिनि दासजने निष्करुणतयात्मानमव्यापारयन्त्या सुखपरिपन्थिनी दुःखदानैकनिपुणा परहृदयपीडानपेक्षिणी लज्जापेक्षिता न जीवितसंदेहदायिनी देव्याः समवस्था। अथवास्य परिजनस्यापि देव्या अपि कोयमेवंविधो व्यामोहः। यदनिच्छन्त्यपि बलादसौ न व्यापारिता। कीदृशी चरणतलप्रतिबद्धस्य दासजनस्योपरि लज्जा। कीदृशं वा गौरवम्। को वानुरोधः। अविश्वस्तचित्तता वा केयमीदृशी। यदेवमात्मनः शिरीषपुष्पकोमलस्येयमतिदारुणा पीडाङ्गीकृता न कृतार्थितो मे मनोरथः। अथवा क्रमागतमन्तर्धानं वामलोचनानां विशेषतोपरि-

त्यक्तनिःशेषबालभावानामनतिप्रबुद्धमुग्धमनसिशयानां कन्यकानाम्। लज्जा न पारिता नामास्मिञ्जने स्वयं परित्यक्तुं देव्या। मदलेखा तु द्वितीयं हृदयमस्याः। तया किमेवमहार्यसंयमधनैर्मुनिभिरप्यरक्षितहृदयापहारेणानिग्राह्यचौरेण शुचिभिरप्यपरिहार्यस्पर्शेनावहिष्कार्य-
5 चण्डालेन भस्मीकृतापर्यवसानप्राणिसहस्रेणानिर्वाप्यश्मशानाग्निना सर्वदोषाश्रयेणाशरीरव्याधिना रूपापहारिणाकाण्डव्याधेन मर्मभेदिनालीकधनुर्धरेण सद्यःप्राणापहारक्षमेणाकालमृत्युनानिरूपितस्थानास्थानप्रवर्तिना परापकारकृतार्थेन हृदयवासिनापरप्रत्ययेन स्वयोनिना कामेन दुरात्मनायास्यमानं देवीशरीरमुपेक्षितम्। किमिति तत्रस्थस्यैव मे
10 कर्णे नावेदितम्। अधुना श्रुत्वापि दिवसक्रमगम्येऽध्वनि किं करोमि। मलयानिलाहतलताकुसुमपातस्याप्यसहं देवीशरीरम्। वज्रसारकठिनहृदयैरपि दुर्विषहाः स्मरेषवः। न ज्ञायते निमेषेणैव किं भवतीति। प्रायेण च देव्याप्यनुभवनीय एवायमर्थः। यथा चास्य दुःखैकदानव्यसनिनो दुर्घटघटनापण्डितस्य यत्किंचनकारिणो निष्कारणकुपितस्य
15 हतविधेः सर्वतो विसंष्ठुलं समारम्भं पश्यामि तथा जानामि नैवायमेतावता स्थास्यतीति। अन्यथा क निष्प्रयोजनाश्वमुखमिथुनानुसरणेनामानुषभूमिगमनम्। क च तत्र तृषितस्याच्छोददर्शनम्। क तत्तीरे विश्रान्तस्यामानुषगीतध्वनेराकर्णनम्। क तज्जिज्ञासागतस्य महाश्वेतावलोकनम्। क तत्र तरलिकया सह तवाभिगमनेन मद्गम-
20 नप्रस्तावः। क महाश्वेतया सह हेमकूटगमनम्। क तत्र देवीवदनदर्शनम्। कानुरागोत्पत्तिरस्मिञ्जने देव्याः। क वापरिपूर्णमनोरथस्य मे पितुरलङ्घनीयागमनाज्ञा। तत्सुदूरमारोप्य पातिता वयं खल्वनेनाकार्यकारिणास्मत्कर्मबलनियोगदक्षेण दग्धवेधसा। तथापि

देवीं संभावयितुं प्रयतामहे ।

इत्यभिदधत्येव चन्द्रापीडे नितरामयमनेनैव कादम्बरीवृत्तान्तेन संतापितस्तत्किमपरमहमेनमात्मतेजसा संतापयामीत्युत्पन्नदय इव भगवांस्तिग्मदीधितिरुत्तप्तकनकद्रवस्फुलिङ्गपिङ्गलद्युति दिग्विकीर्णधूर्जटिजटामण्डलानुकारि संजहार करसहस्रम् । अस्तानुसारेण 5 च रवेर्वासरोपि यथोच्छ्रितरुशिखरावलम्बिनो रक्तातपच्छेदानाकर्षन्नपससार । क्रमेणैव संजातकरुणानुबन्धयेव संध्ययाप्युपरि जलार्द्रपट इव प्रसार्यमाणे स्वरागपटले निशागमेनाप्येवमस्य शून्यताविक्लवस्य मा भूद्दर्शनमित्याप्तेनेव सर्वतो नीलीपरिलम्बमानायामिव भ्राम्यमाणायां तिमिरलेखायां कमलेष्वपि दुःसहत्वाच्छोषकारिणः 10 संतापस्य तल्पकल्पनाभीतेष्विव संकुचत्सु कुमुदेष्वपि शुचिस्वभावतयार्द्रार्द्रेषु शयनसंपादनायेवाहमहमिकयोद्दलत्सु चक्रवाकेष्वपि सहचरीविरहविधुरेषु कादम्बरीसमीपगमनोपदेशदानायेव कलकरुणमुखैर्मुहुर्मुहुर्व्याहरत्सु चन्द्रमस्यपि भगवति समस्तभुवनैकातपत्त्रे सुधारजतकलशे पूर्वदिग्वधूवदनचन्दनतिलके गगनतललक्ष्मीलावण्य- 15 महाह्रदे सकललोकाह्लादकारिणि सुधालिप्तैः करैरिव स्प्रष्टुमुच्छ्वासहेतुना तं ज्योत्स्नाजलेन च सेक्तुमुदयगिरिशिखरमारूढे प्रौढे प्रदोषसमये चन्द्रापीडस्तस्मिन्नेव वल्लभोद्याने चन्द्रातपस्पर्शदर्शितविशदजललवोद्भेदहारिणि चन्द्रमणिशिलातले विमुच्याङ्गानि चरणसंवाहनोपसृतं केयूरकमवादीत् । केयूरक किमाकलयसि । यावद्वयं परा- 20 पतामस्तावत्प्राणान्संधारयिष्यति देवी कादम्बरी । पारयिष्यति वा तां विनोदयितुं मदलेखा । आगमिष्यति वा पुनस्तत्समाश्वासनाय महाश्वेता । मत्परिचयोद्वेजिता प्रतिपत्स्यते वा शरीरस्थितये तयो-

रभ्यर्थनाम् । द्रक्ष्यामि वा पुनस्तस्याः स्मेरसृक्कोपान्तमालोलतारक-मुत्त्रस्तहरिणशावकायताक्षं मुखमिति ।

स तु व्यज्ञपयत् । देव धैर्यं समवलम्ब्य गमनाय यत्नः क्रियताम् । तिष्ठतु तावदासन्नवर्ती सखीजनः परिजनो वा । तस्या हि 5 त्वदालोकनेच्छैव स्वेच्छया निमेषितुमपि न ददाति । समागमाशयैवावष्टब्धं हृदयम् । श्वसितमेव मुखे वहितम् । रोमाञ्च एव क्षणमपि शरीरं न मुञ्चति । दिवानिशं बाष्प एव लोचनपथस्थायी । प्रजागर एव रात्रावपि दत्तदृष्टिः । अरतिरेव नैकाकिन्याः क्षाम्यत्यवस्थानम् । जीवितमेव कण्ठस्थानान्नापसरति ।

10 एवं वदन्तं तमादिदेश विश्रान्तये केयूरकम् । आत्मनापि गमनचिन्तां प्राविशत् । यदि तावदकथयित्वानिपत्य चरणयोरनाघ्रातः शिरस्यगृहीताशीः सहसानुत्संकलित एव तातेनाम्बया वापक्रम्य गच्छामि ततो गतस्यापि मम कुतः सुखं किं श्रेयः कुतो वा फलावाप्तिः कीदृशी वा हृदयनिर्वृतिः । अथवा तिष्ठतु तावदियमुत्तरका-15 लागामिनी चिन्ता । अपक्रम्य गत एव कथमहम् । तातेन दुस्तराहवार्णवोत्तरणमहासेतुबन्धादवन्ध्यवाञ्छितफलप्रदानकल्पद्रुमादहितविक्रान्तियशोनिष्कान्तिद्वारार्गलदण्डादशेषभुवनभवनोत्तम्भनस्तम्भात्स्वभुजादवारोप्य मय्येव राज्यभारः समारोपितः । तदनाख्याय पदमपि निर्याते मय्यवश्यमपरिमितकरितुरगरथगमनसंक्षोभितधरातलैरालोल-20 कदलिकाकाननाकुलीकृतभास्वद्गभस्तिभिरूर्ध्वध्रियमाणधवलातपत्रमण्डलच्छायान्तरितवासरव्यतिकरैरतिबहलरेणूद्गमाविच्छेदापूरितभुवनकुहरैः पुरःप्रसृतजवनवाजिभिरनुसंतानलग्नवैतण्डप्रायसाधनैः श्रान्तैरपि बुभुक्षितैरप्यकृतगतिविलम्बैरा पयोधेरष्टाभ्योपि दिग्भ्यो रा

